*March*

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 231.

# प्रशस्तपादभाष्यटीकासंग्रहः ।

तत्र

## कणादरहस्यम् ।

श्रीशङ्करमिश्रविरचितम्

वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालयाध्यक्षेण
पण्डितविन्ध्येश्वरीप्रसादद्विवेदिना
संस्कृतम् ।

## PRAŚASTAPÂDABHÂSHYATÎKÂSAMGRAHA

A Collection of Commentaries on the
Praśastapâdabhâshya,
KANÂDARAHASYAM

By SRÎ ŚANKARA MIŚRA,

Ed. by *Pandit Vindhyeśwarî Prasâda Dvivedin,*
*Librarian, Government Sanskrit College, Benares*

FASCICULUS I-3


*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE BENARES
AGENTS —
OTTO HARRASSOWITZ, LEIPZIG
PANDITA JYESHTHARAMA MUKUNDAJI BOMBAY
PROBSTHAIN & CO, BOOKSELLERS, LONDON
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press,*
BENARES.

॥ श्रीः ॥

--

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२३१

ॐ नमः परमात्मने ।

# प्रशस्तपादभाष्यटीकासंग्रहः ।

तत्र

## कणादरहस्यम् ।

श्रीशङ्करमिश्रविरचितम् ।

जयति रतिविलासे सङ्गमः शङ्करस्य
स्मरनिगडनिबद्धः काञ्चनः शैलपुत्त्र्याः ।
गरलकवलकालीभूतभूतेशकण्ठ-
स्थलजलधरविद्युद्विभ्रमा बाहुवल्ली ॥ १ ॥

द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां तत्त्वज्ञानं निःश्रेयसहेतुरिति प्रशस्तपादाचार्यभाष्य(१)-व्याख्याच्छलेन कणादरहस्यं व्याख्यास्यामः । द्रव्यादीनां षण्णामपि पदार्थानामुद्देशपरादस्माद्व्याख्यानाद्विभागोऽपि(२) । तत्र यद्यपि नाममात्रेण पदार्थकीर्तनमुद्देशं मृष्यामहे न तु विभागमपि तथापि स हि न्यूनाधिकसङ्ख्याव्यवच्छेदफलकः परिगणनविशेषः । तथा च षडेव पदार्था न न्यूना नाधिका इति

(१) प्रशस्तदेवाचार्यवाक्य—पा० २ पु० ।
(२) विभागो लभ्यते—पा० २ पु० । २ पु० ।

पर्यवस्यति । तत्र एवकारव्यवच्छेद्यप्रतीतौ व्यवच्छेदानुपपत्तिः । अप्रतीतावपि तथा । प्रतीतं हि प्रतिषिध्यते । नाप्रतीतमपि । यदाहुः सङ्ख्यामभावो निरूप्यत इति । पदार्थेषु ससत्वं निषेधामह इति चेन्न तद्विशेषाणामानन्त्येनाशक्यत्वात्(१)। विशेषणसङ्गतादेवकारादयोगव्यवच्छेदः प्रतीयते । तथा च षण्णां द्रव्यत्वगुणत्वादीनां पदार्थेषु अयोगो नास्तीति चेत् न पदार्थानादाय सिद्धसाधनात् अप्रसिद्धेषु तदनुपपत्तेः । यः शक्तिसङ्ख्यादिलक्षणोऽधिकत्वेनाभिमन्यते परैस्तत्रापि षण्णां लक्षणानां मध्ये ऽन्यतरस्य योग एवेति सिद्धं षडेव पदार्था इति चेत् न षट्स्वेव षण्णां लक्षणानामयोगव्यवच्छेदश्चेत्तदा सिद्धसाधनात् षड्भिन्नस्य चाप्रसिद्धेः प्रसिद्धौ वा तत्र षड्लक्षणायोग एव तथा च कथं तद्व्यवच्छेद इति । अत्रोच्यते । शक्तिसङ्ख्यासादृश्यादिषु षड्भिन्नत्वेन मीमांसकादिभिरभिमतेषु षड्लक्षणान्यतमलक्षणायोगव्यवच्छेदस्यैवकारार्थत्वात् । एवं सति सिद्धसाधनमिति चेत् । यस्येदं न ज्ञातं तं शिष्यादिकं प्रति एतदभिधानात् । अत एव शक्तिसङ्ख्यादीनां षडन्तर्भावाग्रहः ॥

---

(१)शक्यत्वात् विशेषाणामानन्त्यात्—पा० २ पु० ।

तत्र पदार्थत्वसाक्षाद्व्याप्याः षडेव धर्माः द्रव्यत्व-गुणत्वकर्मत्वसामान्यत्वविशेषत्वसमवायत्वलक्षणाः ॥

तत्र द्रव्यत्वं गुणात्यन्ताभावानधिकरणत्वं गुणात्य-न्ताभावश्च गुणत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावः । अन्यथा गुणविशेषात्यन्ताभावमादाय स्वरूपासिद्धिः स्यात् । परिमाणात्यन्ताभावानधिकरणत्वं पृथक्त्वात्य-न्ताभावानधिकरणत्वं संख्यात्यन्ताभावानधिकरणत्वं वा समवायिकारणतावच्छेदकत्वेन वा तत्सिद्धिः । सम-वायिकारणता हि गुणादिभ्यो व्यावर्तमाना अवश्यं किञ्चिद्धर्मावच्छेदेन वाच्या स च धर्मो द्रव्यत्वमेव । तच्च जातिरूपं जातित्वे बाधकाभावात् । न च गुण-वत्त्वमेवोपाधिर्द्रव्यत्वव्यपदेशभागिति वाच्यं गुणवत्त्वा-कारानुगतप्रत्यये प्रत्येकं गुणानामसामर्थ्येन परम्परास-म्बद्धया गुणत्वजात्यानुगतप्रत्ययो वाच्यः । तथा च साक्षात्सम्बद्धा द्रव्यत्वं जातिरेवास्तु लाघवात् । न च क्लृप्तेनान्यथासिद्धौ गौरवमप्यङ्गीकार्यमिति वाच्यम् द्रव्याकारानुगतमतेः सिद्धतया तन्निबन्धन-चिन्तायां साक्षात्सम्बद्धधर्मकल्पनाया(१) एवोचितत्वा-त् । गुणत्वस्यापि द्रव्यत्वसिद्ध्युपजीवकत्वात् ।

(१) साक्षात् सम्बन्धिधर्मकल्पनाया—पा० २ पु० ।

सामान्यवानचलनात्मकः परिमाणानाश्रयो गुण इति तल्लक्षणात् ।

असमवेतसमवेतसत्तासाक्षाद्व्याप्यजातिर्वा द्रव्यत्वम् । प्रत्यक्षत्वे सति मनोवृत्त्यवृत्तिमनोवृत्तिजातिर्वा आकाशवृत्त्यवृत्तित्वे सति आकाशवृत्तिजातिर्वा आकाशवृत्त्यवान्तरजातिर्वा द्रव्यत्वम् ।

तत्र पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणि । अन्धकारसुवर्णयोरातिरेक्यशङ्काया निवर्त्तनीयत्वात् । आकाशकालदिगात्ममनसां साधनीयत्वात् ।

तत्र गन्धात्यन्ताभावानधिकरणत्वं गन्धसमानाधिकरणगन्धासमानाधिकरणगुणासमानाधिकरणजात्यधिकरणत्वम् शुक्लेतररूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजात्यधिकरणत्वं वा लक्षणम् । एवं मधुररसेतरसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजात्यधिकरणत्वं वेत्याद्यूह्यम् । तादृशी च जातिः पृथिवीत्वमेव तत्र लौकिकपरीक्षकसाधारणानुगतप्रतीत्यभावेऽपि गन्धसमवायिकारणतावच्छेदकत्वेन तत्सिद्धिः । जलादावपि गन्धोऽस्ति भवति हि सुरभि जलं सुरभिः समीरण इति प्रतीतिरिति चेत् न तत्र तस्यौपाधिकत्वात् । न

हि- कुसुमाद्यधिवासावसरमपहाय प्रतीतिरियमुदेति ।
अन्यथा रक्तः स्फटिक इति प्रतीतिबलात् तत्रापि रक्ति-
मस्वीकारापत्तेः । सा चेयमितरेभ्यो भिद्यते गन्धवत्त्वा-
त् यन्नेतरेभ्यो भिद्यते न तद् गन्धवत् यथा जलम्
इतरभेदाभावव्यापकगन्धवत्त्वाभावाभाववती चेयं त-
स्मादितरेभ्यो भिद्यते । यद्वा इयं पृथिवीति व्यवह्रियते
गन्धवत्त्वात् यन्न पृथिवीति व्यवह्रियते न तद्गन्धव-
त् यथा जलं पृथिवीतिव्यवहाराभावव्यापकगन्धवत्त्वा-
भावाभाववती चेयं तस्मात् पृथिवीति व्यवह्रियते इति
व्यतिरेकी । इतरपदेन जलादीनि द्रव्याण्यष्टौ गुणादयः
पञ्च पदार्थाः अभावश्चोच्यते तथा च जलादिचतु-
र्दशकप्रतियोगिकान्योन्याभाववती पृथिवीति साध्यम् ।
तच्चाप्रसिद्धं न हि जलादीनामन्योन्याभावः क्वचित्
प्रसिद्ध इति न व्याप्तिग्रहो न वा साध्यविशिष्टप्रती-
त्युदय इति चेन्न घटादावेव प्रत्यक्षतस्तत्सिद्धेः । घटा-
दिरपि पक्ष एवेति चेन्न तद्रूप्येण पक्षत्वाभावात् । कि-
न्तु पृथिवीत्वेनैव रूपेण घटादिरपि पक्षः ताद्रूप्येण च
तत्रेतरभेदाग्रहात् । एकस्यैव घटस्य निश्चितसाध्यव-
त्तया सपक्षता सन्दिग्धसाध्यवत्तया च पक्षता इत्यवि-
रोधात् । कथमेवमिति चेत् न घटत्वावच्छेदेनेत-

रभेदज्ञाने पृथिवीत्वावच्छेदेनापि तज्ज्ञाने प्रमाणाभावात् । पक्षभिन्नत्वं दृष्टान्ते(१) तन्त्रमिति चेन्न निश्चितसाध्यवत्त्वस्यैव तत्र तन्त्रत्वात् । अभेदानुमाने तथादर्शनात् । भवति ह्ययं देवदत्ताभिन्नः तद्गतसकलधर्मवत्त्वात् पूर्वदृष्टदेवदत्तवत् । पक्षस्यैव तत्तेदन्तावच्छेदेन यदेव पक्षत्वं सपक्षत्वं च । एतेन व्यतिरेकिणि साध्यं प्रसिद्धं चेत् तदा यत्र यत्प्रसिद्धं तत्र हेतोर्वृत्तावन्वयित्वं व्यावृत्तावसाधारण्यमित्यपास्तम् । घटदृष्टान्तेनान्वयित्वे सत्यपि(२) व्यतिरेकिणोऽपि निर्दोषत्वात् । तदुक्तम् उपायस्यानुपायतोपालम्भः न तु नानात्वमिति । ऋजुमार्गेण सिध्यन्तं को नु वक्रेण साधयेदिति चेन्न । वक्ररुचिं प्रति वक्रमार्गस्यानिर्दोषस्योचितत्वात् । तर्हि घटे मनःप्रभृतीनामन्योन्याभावः कथं प्रत्यक्षः स्यादिति चेन्न अन्योन्याभावस्यातीन्द्रियप्रतियोगिकस्यापि प्रत्यक्षत्वात् । भवति हि स्तम्भः पिशाचो न भवतीति प्रतीतिः स्तम्भात्मकतया पिशाचानुपलम्भस्य योग्यानुपलम्भरूपत्वात् । तस्यैवाधिकरणप्रतियोगिसत्त्वाविरोधिरूपत्वात् । योग्यानुपलम्भस्य चेन्द्रियसहकारित्वात् । संसर्गाभावग्रहमात्रे योग्यप्रतियोगित्वं तत्रं न त्वन्योन्याभावग्रहेऽपीति

(१) सपक्षत्वे—पा० २ पु० । (२) सम्भवत्यपि—पा० २ पु० ।

घटे जलादिप्रतियोगिकभेदस्य प्रत्यक्षादवगमात् । कथं न साध्यप्रसिद्धिः कथं वा पृथिवीत्वावच्छेदेन व्यवहारेतरभेदयोः सिषाधयिषया न घटस्य पक्षत्वं तर्हि व्याप्तिपक्षधर्मत्वयोर्वैयर्थ्यात्(१)व्यतिरेकी नानुमानं न ह्यत्र व्याप्तिविशिष्टः पक्षधर्मश्च व्यतिरेकेण व्याप्तिः अन्वयेन च पक्षधर्मत्वादिति चेन्न व्यतिरेकसहचारेणान्वयव्याप्तेरेव ग्रहणात् व्यतिरेकव्याप्त्या अन्वयव्याप्तेरनुमानाद्वा । तथा च

साध्याप्रसिद्धिर्वैयर्थ्यं व्यर्थतोपनयस्य च ।
अन्वयेनैव तत्सिद्धेर्व्यतिरेकिणि दूषणम्॥ अपास्तम् ।

यद्वा जलादीनामितरेषां प्रसिद्धाना प्रमेयत्वाद्भेदप्रतियोगित्वं साध्यमितीतरभेदः प्रसिद्ध एव । यद्वा जलादीनां त्रयोदशान्योन्याभावास्त्रयोदशसु प्रसिद्धाः पृथिव्यां साध्यन्ते इति नाप्रसिद्धिः । त्रयोदशान्योन्याभावमेलको न प्रसिद्ध इति चेन्न अपेक्षाबुद्धिविशेषविषयत्वमेव हि तेषां मेलको वनादिवत् स च प्रसिद्ध एव । यद्वा पृथिवीत्वासमानाधिकरणधर्मात्यन्ताभाव एव पृथिव्यां साध्यते जलादीनामत्यन्ताभावः तेजःप्रभृतिषु प्रसिद्ध एवेति न साध्याप्रसिद्धिः । तेषामभावानां वैशिष्ट्यमप्रसिद्धमेव सिद्ध्यति पर्वते वह्नि-

(१) वैयर्थ्यात्—पा० २ पु० ।

वैशिष्ट्यवत् । न च पृथिवी जलं पृथिवीत्वात् यन्न जलं तन्न पृथिवी यथा तेज इति सत्प्रतिपक्षः स्यादिति वाच्यम् घटे जलभेदस्य पृथिवीत्वस्य च प्रत्यक्षसिद्धतया व्यभिचारेणास्य न्यूनबलत्वात् । आत्मसाधकस्तु व्यतिरेकी तत्रैव समर्थनीयः ।

सा चेयं पृथिवी चतुर्दशगुणवती । ते च गुणाः रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वगुरुत्वसंस्काराः । संस्कारपदेन वेगस्थितिस्थापकयोरुपग्रहः । अत्र च द्रवत्वपर्यन्ताः प्रत्यक्षत एव सिद्धाः । गुरुत्वं पतनानुमेयम् । अधःसंयोगावच्छेदेनापि प्रत्यक्षमिति वल्लभाचार्याः । वेगः प्रत्यक्षसिद्ध एव । काष्ठादौ कर्मकारणत्वेनानुमेयश्च । नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरमुत्तरं चेति पारमर्षसूत्रात् । स्थितिस्थापकस्तु प्रतिनियतसंयोगविशेषानुमेयो न तु प्रत्यक्षः वेगेन गच्छतीतिवत् तत्प्रत्ययाभावात् । दन्तशृङ्गधनुःशाखानां चर्मरोमन्धाकर्षणानन्तरं तद्देशनियतसंयोगान्यथानुपपत्त्या तदनुमानात् । न हि नोदनाभिघातवेगगुरुत्वद्रवत्वप्रयत्नेभ्य उत्पन्नस्य कर्मणः पूर्वदेशसंयोगं प्रति नियमेन जनकत्वमुपलब्धमतस्तादृशसंयोगजनकः स्थितिस्थापकनामा

संस्कारविशेषः कल्प्यते ।

तत्र रूपमनेकप्रकारं पृथिव्यामेव । रसोऽपि तिक्तकटुकषायादिः पृथिव्यामेव । गन्धो द्विविधः सुरभिरसुरभिश्च । स्पर्शस्त्वनुष्णाशीतः । एते चावयविनि कारणगुणपूर्वकाः । परमाणौ तु पाकजाः । संख्यायामेकत्वं कारणगुणपूर्वकम् । द्वित्वादिकमपेक्षाबुद्धिजन्यम् । परिमाणं तु परमाणौ नित्यम् द्व्यणुके द्वित्वसंख्याजन्यं त्रसरेणौ बहुत्वसंख्याजन्यं महत्त्वम् । एते च द्वित्वबहुत्वे अनुमितिरूपापेक्षाबुद्धिजन्ये ईश्वरापेक्षाबुद्धिजन्ये वा । न चैवं तदविनाशापत्तिः अदृष्टविनाशात् तन्नाशोपपत्तेः। अन्यत्रावयविनि महत्त्वं संख्यापरिमाणप्रचयानामन्यतमेन जन्यं द्वाभ्यां त्रिभिर्वा जन्यते । व्युत्पाद्यं चैतत् परिमाणनिरूपणावसरे । पृथक्त्वेष्वेकपृथक्त्वं कारणगुणपूर्वकं द्विपृथक्त्वादि त्वपेक्षाबुद्धिजन्यम् । संयोगो विभुपरमाण्वोरन्यतरकर्मज एव विभ्ववयविनोरन्यतरकर्मज एव संयोगजश्च परमाण्वोरन्यतरकर्मज उभयकर्मजो वा परमाण्ववयविनोरन्यतरकर्मज उभयकर्मजः संयोगजो वा । विभागोऽप्येवमन्यतरकर्मज उभयकर्मजन्यः विभागजस्तु विभागो विभागावसर एव व्युत्पाद्यः ।

परत्वापरत्वे कालिके दैशिके च। उभे अप्यपेक्षाबुद्धि-जन्ये। कालिके कालपिण्डसंयोगासमवायिकारणके। दैशिके दिक्पिण्डसंयोगासमवायिकारणके। द्रवत्वं नैमित्तिकम्। निमित्तं तु तेजःसंयोगः। क्षीरतैलयोः कथं सांसिद्धिकमिति चेन्न तत्र तदुपष्टम्भकजलद्रवत्वस्यैवोपलम्भात् स्नेहवत्। तादृशजलसत्त्वे तैलस्य दहनप्रातिकूल्यं स्यादिति चेन्न तदीयस्नेहप्रकर्षेण दहनानुकूल्याचरणात् घृतवत्। गुरुत्वं तु कारणगुणपूर्वकमेव। समन्यूनाधिकानुपपत्तिरेवं स्यादिति चेन्न अधिकगुरुत्वस्यैवोत्पादनात्। अथ मन्यसे रुचकाभ्यामारब्धे स्वस्तिके रुचकद्वयस्य यावद्गुरुत्वं तावद्यदि जननीयं तदा गुरुत्वद्वैगुण्यादवनमनविशेषः स्यात्। अथ न्यूनं जननीयं तदा रुचकापेक्षया स्वस्तिकगुरुत्वमन्यदेवेति तदधीनोऽवनमनविशेषः स्यात्। यद्यधिकं गुरुत्वं तदा सुतरामवनमनविशेषः स्यादिति। [illegible] रुचकगुरुत्वाभ्यामवयविनि न्यूनमेव गुरुत्वमु-[illegible] न च तथाप्यवनमनविशेषापत्तिः यथा गुरुणि पाषाणादौ उत्क्षीयमाने तृणादिगुरुत्वानुप्रवेशेऽपि नावनमनविशेषस्तथा प्रकृतेऽपीत्यदोषात्।

कार्यं च पृथिव्याः शरीरेन्द्रियविषयरूपम्। तत्र

शरीरं योनिजमयोनिजं च। इन्द्रियं तु घ्राणम् । तत् कथं पार्थिवमिति चेत्। घ्राणं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् मृगमदगन्धाभिव्यञ्जककुक्कुटोच्चारवत् । न च दृष्टान्ते गन्धमात्रव्यञ्जकत्वमसिद्धं स्वकीयरूपादेरपि व्यञ्जकत्वादिति वाच्यं गन्धव्यञ्जकत्वे सति परकीयरूपाव्यञ्जकत्वादिति हेतुत्वात् । विषयस्तु मृत्पाषाणमणिवज्रादयः । ननु मणिः कथं पृथिवी गन्धविरहादिति चेन्न तद्भस्मनि गन्धानुभवेन तत्रापि गन्धकल्पनात् मण्यारम्भकपरमाणूनामेव भस्मारम्भकत्वात् । अनुद्भूतगन्धैरुद्भूतगन्धारम्भः कथमिति चेत् अनुद्भूतरूपेण तेजसा तैलादावुद्भूतरूपतदारम्भवदुपपत्तेः ।

सा चेयं नित्याऽनित्या च तत्र नित्या परमाणुरूपा। अनित्या त्ववयविरूपा(१)। अवयविनं न मृष्यामहे विरुद्धधर्माध्यासेनैकस्यैव पटादिभावेनाभिमतस्यावयविनोऽनेकत्वात्। परमाणुः स्वभिन्नोपादेयोपादानं न वेत्यवयविनि विप्रतिपत्तिः। रक्तारक्तविरोधादवयवकोटिर्नास्तीति चेन्न रक्तत्वेनाभिमतस्य भागस्य रक्तत्वात् । रक्तप्रत्ययस्तु महारजनाद्यौपाधिकः ।

---

(१) अवयविलक्षणा–पा० २ पु०

अस्तु तर्हि चलाचलत्वविरोध इति चेन्न पाण्यवच्छेदेन यत्र चलत्वमुपलभ्यते तत्र पादावच्छेदेनाचलत्वं तत्रावयविनोऽचलत्वमवयवस्य परं चलत्वमविरोधात्। तर्ह्यवयवावयविनोर्युतसिद्धिः स्यात् वस्त्रोदकवदिति चेत्। चलाचलत्वं चेद् युतसिद्धिः तदेष्टापत्तिः पृथगाश्रयाश्रयित्वं चेत्तदापि तथा अवयविनः स्वावयववृत्तित्वात् तदवयवस्य च स्वावयववृत्तित्वात्। परस्परविभागाहेतुक्रियावत्त्वं चेत् तत्र समवायाभाववत्त्वस्योपाधित्वात्।

अस्तु तर्हि कारस्न्यैकदेशविकल्पासहत्वादवयविभङ्गः तद्यथा अवयवी स्वावयवेषु यदि कार्त्स्न्येन वर्त्तते तदा अवयवान्तरावृत्तित्वान्न व्यासज्यवृत्तिता। अथैकदेशेन वर्तते तदा अवयवातिरिक्तस्यैकदेशस्याभावात् क्व वर्ततामिति चेन्न अवयवी स्वावयेषु स्वरूपेण वर्त्तत इत्यभ्युपगमात्॥

अथ जलम्। स्नेहसमानाधिकरणस्नेहासमानाधिकरणगुणासमानाधिकरणजात्यधिकरणत्वं जलत्वम्। स्नेहस्थाने सांसिद्धिकद्रवत्वप्रक्षेपाद्वा तल्लक्षणम् मधुररसमात्रसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजात्यधिकरणत्वं सांसिद्धिकद्रवत्वस्थाने(१) शी-

(१) स्नेहस्थाने—पा० २ पु०।

तत्स्पर्शप्रक्षेपाद्वा तल्लक्षणम् । नित्यरससमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजात्यधिकरणत्वं वा । गन्धासमानाधिकरणरससमानाधिकरणजात्यधिकरणत्वं वा । गन्धासमानाधिकरणगुरुत्वसमानाधिकरणजात्यधिकरणत्वं वा । गन्धात्यन्ताभवसमानाधिकरणरससमानाधिकरण(द्रव्यत्वसाक्षाद्व्याप्य)(१)जात्यधिकरणत्वं वा । रसस्थाने गुरुत्वं वा प्रक्षेप्तव्यम् । द्रवत्वाधिकरणत्वे सति नैमित्तिकद्रवत्वानधिकरणत्वं(२) वा । तच्च जलमितरेभ्यो भिद्यते स्नेहवत्त्वात् न यदेवं न तदेवं यथा पृथिवीति पूर्ववदूह्यम् । हिमकरकासारित्समुद्रादिषु जलाकारानुगतप्रत्ययाभावान्न जलत्वं जातिरिति चेन्न अनित्यस्नेहसमवायिकारणतावच्छेदकतया तत्सिद्धिः । तर्हि परमाणुषु कथं तदिति चेन्न जलारम्भकः परमाणुः स्वोपादेयवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमान् परमाणुत्वात् पार्थिवपरमाणुवत् इति तत्रापि स्नेहवन्मात्रनिष्ठसंयोगसमवायिकारणतावच्छेदकतया वा परमाणुसाधारण्येन तत्सिद्धिः । संयोगस्थाने विभागद्वित्वद्विपृथक्त्वादिपरत्वापरत्वप्रक्षेपाद्वा तत् साधनीयम् । पृथि-

---

(१) () एतन्मध्यस्थः पाठो नास्ति २ पु० ।

(२) द्रवत्वानधिकरणजातित्व-पा० १ पु० ।

ष्वामपि घृतादौ स्नेहोऽतस्तद्धर्मे जललक्षणमनुपपन्नमिति चेत् न तत्र संयुक्तसमवायेन तदुपलम्भात् जलेनापि संग्रहदर्शनात् स्नेहद्रवत्वयोश्च संग्रहकारणत्वात् तत्रावश्यं स्नेहकल्पनात् । शुक्लमेव रूपमपामित्यसिद्धम् कालिन्दीजलादौ नीलिमोपलम्भादिति चेन्न तत्राश्रयोपाधिकत्वात् तस्य कथमन्यथा वियद्विक्षिप्तानामपां धावल्यमुपलभ्यते ।

ननु मधुर एव रसोऽम्भसीति कथं यतो रसमात्रस्यैवानुपलम्भात् । लवणोदधौ(१) लवणरसोपलम्भात् । करवीरफलादौ तैक्ष्ण्योपलम्भादिति चेन्न हरीतकीभक्षणानन्तरं माधुर्योपलम्भात् । न च हरीतकीमाधुर्यमेव जलेनाभिव्यज्यत इति वाच्यम् तदीयरसान्तराभिव्यक्तिप्रसङ्गात् । तत्र रसान्तरं नास्त्येवेति चेन्न षड्रसा हरीतकीति व्यवहारोच्छेदापत्तेः(२) । तत्तद्रसकार्यकारितया तथा व्यवहार इति चेन्न षड्रसत्वे बाधकाभावात् । तत्तद्रसोत्पत्तौ गुणविरोध एव बाधकमिति चेत् तर्हि पटादावपि चित्रं रूपं न स्यात् । एवं सति पटस्य नीरूपतया तदनुपलम्भापत्तिरिति चेत् न पटस्य चाक्षुषत्वा(३)-

(१) लवणजलादौ–पा० २ पु० ।

(२) व्यवहारविरोधापत्तेः–पा० २ पु० ।

(३) प्रत्यक्षत्वा–पा० २ पु० ।

न्यथानुपपत्त्या चित्रं रूपं विजातीयमेव यथा कल्प्यते तथा च विलक्षणरसकल्पने षोढा परिगणनविरोधात्। षण्णामपि रसानां हरीतक्यां वृत्तौ व्याप्यवृत्तिताभङ्गप्रसङ्गात् हरीतक्या नीरसत्वकल्पने बाधकाभावात्। नीरसैव हरीतकी कषायादिरसानां तदवयवगतानामुपलम्भ इति हरीतक्या जलमाधुर्याभिव्यक्तेरेवौचित्यात्। हरीतक्यां जलसंयोगेन माधुर्यमेवोत्पद्यतामिति चेन्न पृथिवीरसस्याकारणगुणपूर्वकस्याग्निसंयोगमात्रोत्पाद्यत्वात्। कर्कटीभक्षणानन्तरं तैक्त्यमुपलभ्यत इति चेत् न तत्र कर्कटीतैक्त्यस्यैव जलेनाभिव्यक्तेः। विनिगमकं किमत्रेति चेन्न कर्कट्यां जलपानात् पूर्वमपि तैक्त्योपलम्भात् कर्कटीभक्षणेन रसनाग्रवर्तिपित्तक्षोभो वा क्रियते तदीयमेव तैक्त्यमनुभूयत इति वैद्यकप्रसिद्धेः।

ननु शीत एव स्पर्शो जल इत्यनुपपन्नम्। उष्णोदकादौ औष्ण्यस्याप्युपलम्भादिति चेन्न तत्रातपसंयोगादेरुपाधेः सत्त्वात्। श्रीखण्डेऽपि शैत्यमस्तीति चेन्न तत्र घर्षकजलशैत्यस्योपलम्भादिति। ततोऽप्यधिकं तत्रानुभूयत इति चेन्न श्रीखण्डसंयोगाद्विलक्षणजलशैत्याभिव्यक्तिः श्रीखण्डान्तरवर्तिनो

जलस्य घर्षणात् बहिरानीतस्य वा तच्छैत्यमिति न किञ्चिदनुपपन्नम् । गन्धस्थले स्नेहप्रक्षेपादुक्ता एव चतुर्दशगुणाः । तेषामुत्पादविनाशावपि तद्वदेव रूपादीनामिहापाकजत्वमिति विशेषः ।

कार्यमपामपि शरीरेन्द्रियविषयरूपं त्रिविधमेव(१)। तत्र शरीरमयोनिजमेव वरुणलोके प्रसिद्धम् । पार्थिवभागोपष्टम्भाच्चोपभोगसमर्थम् । इन्द्रियं तु पार्थिवाद्यनुपष्टब्धजलावयवैरारब्धं रसनमाप्यं गन्धादिषु मध्ये रसस्यैवाभिव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकसलिलवदित्याप्यत्वे मानम् । विषयस्तु सरित्समुद्रहिमकरकादिरूपः । करका पृथिवी कठिनसंयोगवत्त्वाद्घटवदिति चेन्न अनुष्णाशीतस्पर्शस्योपाधित्वात् । साधनव्यापकत्वान्नायमुपाधिरिति चेन्न पक्ष एव साधनाव्यापकत्वात् । पक्षे कठिनसंयोगवत्त्वं नास्ति किन्तु अदृष्टवशात् द्रवत्वं प्रतिरुद्धमित्येव तत्र काठिन्यबुद्धिरिति चेन्न तदा त्वदुक्तहेतोः स्वरूपासिद्धत्वादेवानुमानभङ्गात् । उपाधिस्त्वदुक्तस्तावद्भग्न इति चेन्न क्वचित् साधनव्यापकस्याप्युपाधित्वोपगमात् । तर्हि साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपा-

( १ ) विषयलक्षणं त्रिविधमेव–पा० २ पु० ।

धिलक्षणमव्यापकं स्यादिति चेत्(१) न यद्व्यावृत्त्या पक्षे साध्यसाधनसम्बन्धव्यावृत्तिः स उपाधिरित्युपाधिलक्षणात् । व्यावर्तते ह्यनुष्णाशीतस्पर्शवत्त्वव्यावृत्त्या करकातः साध्यसाधनसम्बन्धस्तत्र साध्यसाधनयोरुभयोरपि व्यावृत्त्या सम्बन्धव्यावृत्तिरन्यत्र तु साध्यमात्रव्यावृत्त्येत्यन्यदेतत् । स्वरूपासिद्धौ(२) सत्यां किमुपाधिनेति चेन्न उपाधेः सर्वत्र दूषणान्तरसङ्कीर्णत्वादिति ।

अथ तेजः । तत्र रसवद्वृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तेजस्त्वम् । गुरुत्वासमानाधिकरणरूपसमानाधिकरणजात्यधिकरणत्वं वा । न च धूमेऽतिव्याप्तिः । तत्राप्यलं धूमदशायां गुरुत्वोपलम्भात् । वह्निना नोदनादत्यन्तापकृष्टगुरुत्वस्य धूमस्योर्ध्वगमनाद्वायुनोदनाद्वा धूलीपटलतूलकादिवत् । गुरुत्वाधिकरणानधिकरणरूपानधिकरणानधिकरणजात्यधिकरणत्वं वा । गुरुत्वसमानाधिकरणद्रव्यत्वसाक्षाप्यजात्यधिकरणानधिकरणरूपसमानाधिकरणजातिमत्त्वं वा । अभास्वररूपाधिकरणानधिकरणरूपसमानाधिकरणजा–

(१) अव्यापकत्वाद्दूषणमिति चेत्–पा० २ पु० ।
(२) निरुपाधिसिद्धौ–पा० १ पु० ।

तिमत्त्वं वा । गुरुत्वासमानाधिकरणद्रवत्वसमानाधिकरणजात्यधिकरणत्वं वा । उष्णस्पर्शानधिकरणानधिकरणजात्यधिकरणत्वं वा । चन्द्रचामीकरादावप्युनुद्भूतोष्णस्पर्शवत्त्वात् रसवदवृत्तिद्रवत्ववद्वृत्तिजातिमत्त्वं वा । साधयिष्यते च तेजसि द्रवत्वम् । भास्वररूपसमानाधिकरणभास्वररूपासमानाधिकरणगुणासमानाधिकरणजात्यधिकरणत्वं वा । औष्ण्यसमानाधिकरणौष्ण्यासमानाधिकरणगुणासमानाधिकरणजात्यधिकरणत्वं वा ।

ननु तादृशी जातिस्तेजस्त्वं वाच्या सा चासिद्धा(१) चन्द्रचामीकरादिसाधारण्येनानुगतप्रतीत्यभावादिति चेन्न उष्णस्पर्शसमवायिकारणतावच्छेदकतयाऽन्वयिनि तज्जातिसिद्धेः तेजःपरमाणुः स्वोपादेयवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमान् द्रव्यसमवायिकारणत्वात् द्रव्यासमवायिकारणसंयोगाधारत्वात् अवयवत्वात् स्पर्शवत्त्वे सति अनन्त्यावयवित्वात् स्पर्शासमवायिकारणस्पर्शाधारत्वात् रूपासमवायिकारणरूपाधारत्वात् द्रव्यारम्भकपरमाणुसंयोगप्रतिद्वन्द्विविभागसमवायिकारणत्वात् तन्तुवत् कपालवत् पार्थिवपरमाणुवदित्याद्यूह्यम् ।

---

(१) तेजस्त्वं वाच्यं तच्चाप्रसिद्धं-पा० २ पु० ।

ननु वह्नेररुणकपिलादिरूपोपलम्भात् शुक्लमेव रूपं तैजसीत्यसिद्धमिति चेन्न तत्रापि तेजस्त्वेन शुक्लरूपवत्त्वसाधनात् । तर्हि तादृशं रूपमुपलभ्येतेति चेन्न शुक्लत्वजातेस्तत्राभिभूतत्वात् । आरुण्याद्युपलम्भः कथमिति चेन्न दाह्यलक्षणोपाधिसामर्थ्यात् । किमिति कल्पनेयमिति चेन्न भास्वररूपवत्तया उष्णस्पर्शवत्तया च वह्नेस्तेजस्त्वसिद्धौ शुक्लरूपानुमानात् । तत्र रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारा एकादशगुणाः रूपं शुक्लं भास्वरम् भास्वरत्वं च पररूपप्रकाशत्वव्यङ्ग्या रूपगता जातिः प्रभायामपि तेजस्त्वादौष्ण्यमनुमेयम् । कनके शुक्लभास्वरत्वं चाभिभूतं न तु रूपमेव कनकाप्रत्यक्षत्वप्रसङ्गात् । यद्वा रूपमप्यभिभूतं कनकस्य ग्रहणं तु पररूपोपग्रहेण यथा महारजनरक्तस्य पटादेः । अन्धकारे तर्हि बलवत्सजातीयग्रहणाभावात् कनकरूपानभिभवे ग्रहणप्रसङ्गः न हि तेजोरूपग्रहे ऽपि तेजोन्तरापेक्षेति चेन्न बलवत्सजातीयसम्बन्धमात्रस्यैवाभिभवत्वात् । स च रात्रावपि इति तमसि कनकानुपलम्भ एव । उष्मापि तेज उष्णस्पर्शवत्त्वात् तर्हि स्पर्शोद्भवे रूपोद्भवोऽपि स्यादिति चेन्न तेजसि तादृशव्याप्तेरभावा-

त् प्रभायां रूपोद्भवेऽपि स्पर्शानुद्भवस्य च स्पर्शोद्भवेऽपि रूपानुद्भवसम्भवात् ।

अत एव तेजश्चातुर्विध्याभ्युपगमः । किञ्चिदुद्भूतरूपस्पर्शं यथा सौरम् । किञ्चिदनुद्भूतोभयं यथा चक्षुः । किञ्चिदनुद्भूतरूपमात्रं यथोष्मा तैलादिगतं च तेजः । किञ्चिदनुद्भूतस्पर्शमात्रं यथा चन्द्रचामीकरादि ।

ननु चामीकरादेस्तेजोन्तरवैधर्म्यात्तेज एव न भवतीति चेन्न सुवर्णं तैजसमत्यन्तानलसंयोगे सति अनुच्छिद्यमानानित्यद्रवत्वाधिकरणत्वात् । यन्न तैजसं तन्नात्यन्ताग्निसंयोगानुच्छिद्यमानानित्यद्रवत्वाधिकरणं यथा घटः । अतैजसत्वव्याप्यात्यन्ताग्निसंयोगानुच्छिद्यमानानित्यद्रवत्वाभावाभाववच्चैतत् तस्मात्तैजसमिति तत्सिद्धेः । सुवर्णं पार्थिवं गुरुत्वाधिकरणत्वात् पीतिमाधिकरणत्वात् नैमित्तिकद्रवत्वाधिकरणत्वात् । यद्वा सुवर्णं न तैजसमौष्ण्यानधिकरणत्वात् पीतत्वात् अभास्वररूपवत्त्वादित्यादिना सत्प्रतिपक्षत्वमिति चेन्न एतेषां हेतूनां स्वरूपासिद्धत्वेन हीनबलत्वात् । नैमित्तिकद्रवत्ववत्ता न सिद्ध्येदिति चेन्न पृथिवीवृत्तिद्रवत्वविलक्षणद्रवत्ववत्त्वेन तैजसत्वस्यैव सिद्धेः । अन्यथा जलं पृथिवी रूपवत्त्वात् स्पर्शवत्त्वादित्याद्यपि स्यात् ।

अथ वायुः। समवेतद्रव्यसमवेतत्वे सति रूपवदसमवेतजातिमत्त्वं वायुत्वम्। रूपासमानाधिकरणस्पर्शसमानाधिकरणजात्यधिकरणत्वं वा स्पर्शसमानाधिकरणातीन्द्रियद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम् अवयविवृत्तिरूपवदवृत्तिजातिमत्त्वं वा रूपासमानाधिकरणज्ञानासमानाधिकरणविशेषगुणसमानाधिकरणजातिमत्त्वं वा रूपाधिकरणानधिकरणस्पर्शानधिकरणानधिकरणजात्यधिकरणत्वं द्रवत्वासमानाधिकरणस्पर्शसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा(१) अपाकजानुष्णाशीतस्पर्शसमानाधिकरणापाकजानुष्णाशीतस्पर्शासमानाधिकरणगुणासमानाधिकरणजात्यधिकरणत्वं वा रूपात्यन्ताभावसमानाधिकरणविशेषगुणवन्मूर्त्तमात्रवृत्तिजात्यधिकरणत्वं वा रूपवदवृत्तिद्रव्यारम्भकसंयोगसमानाधिकरणजातिमत्त्वं वेत्याद्यूह्यम्। स्पर्शवन्नीरूपं द्रव्यमेव नास्ति प्रमाणाभावादिति चेन्न स्पर्शेन तदनुमानात्। स्पर्शः पार्थिव एवायं किन्न स्यान्न स्यात् रूपासहचरत्वात्। अनुद्भूतं तत्र रूपं स्यादिति चेन्न उद्भूतस्पर्शवत्पृथिव्या उद्भूतरूपवत्त्वनियमात्। नियम एवायं नेष्यत इति चेन्न निरुपधिसहचारेण तत्सिद्धेः। उद्भूतरूपा धूमादिलक्षणा पृथि-

(१) जात्यधिकरणत्वं वा—पा० २ पु०।

वी यथा स्पर्शोद्भवं व्यभिचरत्येवमुद्भूतस्पर्शो रूपोद्भवं व्यभिचरेदिति चेन्न धूमेऽपि चक्षुर्गोलकावच्छेदेन स्पर्शग्रहात्। तर्हि विततचम्पकादिभागे गन्धोद्भवोऽपि रूपोद्भवं न व्यभिचरेत् विततावयवजलशैत्योद्भवोऽपि रूपोद्भवं न व्यभिचरेदिति चेन्न गन्धशैत्ययोः पार्थिवाप्यत्वनिश्चयात् तत्र रूपानुद्भवकल्पनौचित्यात्। एवं मेघादिसंयोगादाकाशे उत्पद्यमानः शब्दः स्पर्शवता द्रव्यान्तरेण मेघादिसंयोगान्निमित्तकारणाद्भेरीदण्डसंयोगादिवोत्पद्यते तत्र स्पर्शवतोऽन्यस्य द्रव्यस्याभावाद्वायुरेव कल्पनीयः। एवं मेघादिधृतिरपि आकाशे स्पर्शवत्संयोगं विनानुपपद्यमाना स्पर्शवतोर्वायोः संयोगं कल्पयति अन्यस्याभावात् नौकाधृतिरिव जलसंयोगम्। एवं तृणादौ कम्पः स्पर्शवद्द्रव्याभिघातजन्य इति ततोऽपि वायुसिद्धिः। तदुक्तं वायुः स्पर्शशब्दधृतिकम्पलिङ्ग इति।

कार्यं चास्य चतुर्विधम्। शरीरेन्द्रियविषयप्राणलक्षणम्। शरीरं वायुलोके प्रसिद्धम्। पार्थिवभागोपष्टम्भाच्चोपभोगसमर्थम्। इन्द्रियं त्वगधिष्ठानं शरीरस्य सहजावरणं त्वक् वायूपादानमिन्द्रियं त्वगिन्द्रियं त्वगधिष्ठानमिन्द्रियं शरीरस्य सहजावरणमित्यर्थः। तच्च स्पर्शग्राहकं तदुपष्टम्भेन द्रव्यादेर्ग्राहकम्। वायवीयत्वे तस्य किं प्रमा-

णं(१) त्वगिन्द्रियं वायवीयं गन्धादिषु मध्ये स्पर्शमात्रग्राहकत्वात् । अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनवातवत् । विषयस्तूपलभ्यमानस्पर्शाश्रयो वायुः । तस्य चानेकत्वं प्रतिघातसाद्वायोः प्रतिघातकस्यान्यत्वात् । प्रतिघातश्च तृणादेरूर्ध्वगमनानुमेयः तिर्यग्गतिशीलादूर्ध्वगतिशीलं द्रव्यान्तरमेव किं न स्यादिति चेत् न तिर्यग्गतिशीलस्यापि जलस्य प्रतिघातादूर्ध्वगतिदर्शनात् । प्राणश्च शरीरान्तश्चारी वायुः । स एक एव तत्तत्क्रियाकारित्वात् पञ्चसंज्ञां लभते । शारीराः पञ्चवायव इत्यपि क्रियापञ्चकनिबन्धन एव प्रवादः ।

नतु वायुः प्रत्यक्ष एव किन्न स्यात् । त्वगिन्द्रियव्यापारानन्तरं वायुर्वातीति प्रतीतेः । तथा च प्रयोगः वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् यदेवं तदेवं यथा घट इति चेत् न उद्भूतरूपवत्त्वस्योपाधित्वात् । आत्मनि साध्याव्यापकमिदमिति चेन्न साधनावच्छिन्नसाध्यव्यापकत्वात् । तदुक्तम् ।

वाद्युक्तनियमच्युतोपि कथकैरुपाधिरूह्यः ।
पर्यवसितं नियमयन् दूषकताबीजसाम्राज्यात् ॥

चाक्षुषप्रत्यक्षतायामेव तत्तन्त्रं न तु स्पार्शन-

---
(१) किं मान—पा० २ पु० ।

प्रत्यक्षतायामपीति चेन्न सामान्ये बाधकाभावात् । किञ्च वायोः प्रत्यक्षत्वे तद्गतसंख्यापरिमाणादिग्रहण-प्रसङ्गः । ननु यज्जातीयं प्रत्यक्षं तज्जातीयस्य संख्यादिकं प्रत्यक्षमिति व्याप्तिश्चेदभिमता तदा फूत्कारे संख्यादि-ग्रहोऽस्त्येव। अथ या व्यक्तिः प्रत्यक्षा तदीयं संख्यादिकं गृह्यत एवेति नियमस्तदा पृष्ठलग्नवस्त्रादौ व्यभिचार इति चेन्न फूत्कारादपि संख्याप्रतीतेरानुमानिकत्वात् पृष्ठलग्नवस्त्रादेरपि करपरामर्शेन संख्यापरिमाणादेर्ग्र-हणात् । द्वितीयनियमे ऽपि न व्यभिचारः चक्षुषा वस्त्रसंख्यादिग्रहणात् । न ह्येतादृशो नियमो यत् प्रत्यक्षं तत्संख्यादिविषयकमेव किं तर्हि या व्यक्तिः प्रत्यक्षा तदीयसंख्यादिकं गृह्यत एवेति । वायौ च तथा नास्तीति वायुरप्रत्यक्ष एवेति । उद्भूतरूपवत्त्वं उद्-भूतस्पर्शवत्त्वं च मिलितं तन्त्रमिति तात्पर्याचार्याः । तन्मते चान्द्रं तेजो नयनगतपित्तद्रव्यं पद्मरागादिप्रभा-दिकं च किमपि न प्रत्यक्षम् । तथा चोद्भूतरूपवत्त्वस्यो-द्भूतस्पर्शवत्त्वसहकृतस्य वा तस्य प्रयोजकत्वे वायुरप्र-त्यक्ष एवेति। वायुत्वजातिरनित्यापाकजानुष्णाशीतस्पर्शस-मवायिकारणतावच्छेदकतया साध्या परमाणौ तु पूर्ववत् साधनीयेति दिक्। अत्र च स्पर्शसंख्यापरिमाणपृथक्त्व-

संयोगविभागपरत्वापरत्वसंस्कारा नवगुणाः । द्वित्वद्वि-
पृथक्त्वपरत्वापरत्वानामिहानुमानिक्यपेक्षाबुद्ध्योत्पत्तिः ॥

अथाकाशम् । शब्दः क्वचिदाश्रितो गुणत्वादिति सामान्यतो दृष्टेन पृथिव्याद्याश्रितत्वबाधसहकारिणाष्टद्रव्यातिरिक्तद्रव्याश्रितत्वपर्यवसायिना सिद्धस्य नवमद्रव्यस्याकाशमिति संज्ञा । सामान्यतो दृष्टावतारानन्तरं बाधावतारदशायां तु शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात् यदष्टद्रव्यातिरिक्तद्रव्याश्रितं न भवति तदष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितं न भवति यथा रूपमिति व्यतिरेकिणा वा तत्सिद्धिः । लक्षणं तु शब्दसमवायित्वं ज्ञानानधिकरणविशेषगुणाधिकरणविभुत्वं वा एवमिच्छायत्नयोरपि पूरणादूह्यम् सुखादिपूरणे त्वीश्वरात्मन्यतिव्याप्तिः । नित्यविशेषगुणवद्वृत्तिद्रव्यत्वव्याप्यजातिशून्यत्वे सति विशेषगुणवत्त्वं वा निःस्पर्शभूतत्वं वा । तच्चातीन्द्रियं नीरूपं बाह्यद्रव्यत्वात् सकलमूर्त्तसंयोगिपरममहत्त्वाश्रयत्वात् । न चापरिमितमेवाकाशम् द्रव्यत्वव्याकोपात् द्रव्यत्वव्याप्यजातिशून्यं चैकत्वात् । तदुक्तम् ।

व्यक्तेरभेदस्तुल्यत्व सङ्करोथानवस्थितिः ।

रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥ इति ।
तर्हि किमाकाशपदप्रवृत्तिनिमित्तं न किञ्चित् किं तु शब्दाश्रयत्वं तटस्थलक्षणम् एवं सत्याकाशपदान्निर्विकल्पकमेव स्यादिति चेत् न इष्टापत्तेरिति केचित् । स्मृत्युपनीतस्यापि शक्तिग्रहप्रकारत्वादशक्यमपि तत्र शब्दाश्रयत्वमेव नियमतो भासत इति केचित् । शब्दाश्रयत्वमपि शक्यमेवेत्यपरे । अत एवाकाशं कालो दिगिति पारिभाषिक्यः तिस्रः संज्ञा इति भाष्यम् । संज्ञा हि पञ्चविधा भवति शृङ्गग्राहिकया यथासौ देवदत्त इति । पारिभाषिकी यथाकाशमिति इयमेव तटस्थलक्षणेत्युच्यते शब्दाश्रयत्वस्योपलक्षणस्य तटस्थत्वात् । काचिदन्तर्भूतोपलक्षणा यथा पाचक इत्यादि । अत्र ह्युपलक्षणं पाकक्रिया सापि पाचकपदजन्यबुद्धावन्तर्भवति । काचित् सनिमित्ता या गवादिसंज्ञा अत्र हि गोत्वादिकं प्रवृत्तिनिमित्तम् । काचित्तु निमित्तसङ्कोचनियमेन(१) यथा स्वर्गादिसंज्ञा अत्र हि सुखत्वमेव प्रवृत्तिनिमित्तं तच्च दुःखासम्भिन्नत्वादिना निमित्तेन सङ्कोच्यते । ननु देवदत्तादिसंज्ञा कथं शृङ्गग्राहिकया यावता देवदत्तत्वादिजातेः प्रवृत्तिनिमित्तस्य सत्त्वादिति चेत् सत्यम्

(१) सङ्कोचनिकया—पा० २ पु० ।

अचेतने स्तम्भकुम्भादौ देवदत्तसंज्ञायास्ताद्रूप्येणाभिमतत्वात् । यद्वा समानकालीनानेकावृत्तिः शरीरवृत्तिजातिर्देवदत्तत्वं तया बहूनामवच्छेदमजानानं प्रति देवदत्तोयमिति संज्ञा शृङ्गग्राहिकैव तावत् तदेवाकाशं कर्णशष्कुल्यवच्छिन्नं श्रोत्रम् । ननु वीणावेणुमृदङ्गानामेव श्रोत्रत्वं तावता वीणायां शब्दो वेणौ शब्द इति प्रतिपत्तिः । ननु वीणायामुत्पन्नेन शब्देन भवदभिमतस्य श्रोत्रस्य सम्बन्धोऽस्तीति चेत् न वीणादीनां प्रत्येकमेकैकस्य पुरुषस्य श्रोत्रत्वकल्पनायां कल्पनागौरवात् शब्देन कर्णशष्कुल्यवच्छिन्नेन नभसा समवाय एव सम्बन्धः । तर्हि दवीयानपि शब्द उपलभ्येतेति चेन्न कर्णशष्कुल्यवच्छेदेन तत्समवायस्य विवक्षितत्वात् । तर्हि वीणावच्छिन्ने नभसि समुत्पन्नेन शब्देन तदवच्छेदेन कथं समवाय इति चेत् न वीणादिदण्डसंयोगनिमित्तकेन भेर्याकाशसंयोगासमवायिकारणकेनाद्येन शब्देन दशसु दिक्षु दश शब्दा आरभ्यन्ते तैरपि प्रत्येकं तावन्त एव तावद्यावच्छ्रोत्रप्रतीतिरिति । अत एव चतुर्दिक्षु सर्वेषां शब्दोपलब्धिः(१) अथ कुड्यादिदेशेन निमित्तवायोः प्रतिघातादग्रे वायोः संसरणाभावादन्त्यः शब्दः शब्दा-

(१) शब्दोपलम्भः-पा० २ पु० ।

न्तरं नारभते अतो महति दूरे नोपलम्भः ।

नन्वेकः शब्दो बहुभिश्चेन्न श्रूयते तदा य एव वीणाशब्दः त्वया श्रुतः स एव मयापीति कथं प्रत्यभिज्ञेति चेत् न तज्जातीयत्वेन प्रत्यभिज्ञानोपपत्तेः । य एव शालिस्त्वया भुक्तः स एव मयापीतिवत् । यद्वा वीचीतरङ्गन्यायेनैकैकेन शब्देन एक एव हि शब्दो जन्यते तथा च व्यक्त्यभेदकृतैव प्रत्यभिज्ञा ।

नन्वाकाशस्य नित्यत्वाद्विभुत्वाच्च व्यतिरेकाभावात् सकलकार्यपूर्ववर्त्तितया सर्वं प्रति कारणता स्यात् न स्यात् अन्यथासिद्धत्वात् शब्दं प्रति पूर्ववर्तित्वे ज्ञात एव कार्यान्तरं प्रति पूर्ववर्तित्वग्रहात् । तर्हि स्वनिष्ठसंयोगादिकं प्रत्यपि न कारणता अन्यथासिद्धत्वादिति चेत् नैवं स्वनिष्ठसंयोगादिकं प्रति नाकाशत्वेनास्य कारणता किन्तु द्रव्यत्वेनेति गृहाण । ननु शब्दं प्रत्यपि कथमस्य कारणता स्यात् व्यतिरेकासम्भवादिति चेत् न शब्दं प्रति तत्कारणताया धर्मिग्राहकमान(१)सिद्धत्वात् । तदुक्तम् । व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा नहीति । यद्वा आकाशे शब्दः आकाशादन्यत्र न शब्द इत्यन्योन्याभावरूप(२)व्यति-

(१) प्रमाण-पा० २ पु० । (२) अन्योन्याभावमेव-पा० २ पु० ।

रेकमादाय कारणताग्रहात् । शब्दस्य नित्यत्वात् तं प्रति कथमाकाशं कारणमिति चेत् न एतस्य तत्राभिमानस्याग्रे निरस्तत्वादिति(१) ॥

अथ कालः । स च परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिङ्गः संयोगविषयापेक्षाबुद्धिजन्यपरत्वासमवायिकारणसंयोगाधिकरणविभुत्वं कालत्वम् । संयोगाविषयापेक्षाबुद्धिजन्यपरत्वासमवायिकारणसंयोगाश्रयत्वे सति परममहत्त्वाश्रयत्वं वा । संयोगविषयापेक्षाबुद्धिजन्यपरत्वासमवायिकारणसंयोगाश्रयत्वे सति विशेषगुणासमानाधिकरणमहत्त्वाधिकरणत्वं वा संयोगानुपनायकत्वे सति विशेषगुणासमानाधिकरणमहत्त्वाश्रयत्वं वा संयोगविषयापेक्षाबुद्धिजन्यपरत्वासमानाधिकरणसंयोगानाश्रयत्वे सति विशेषगुणासमानाधिकरणमहत्त्वाधिकरणत्वं वा एवमपरत्वप्रक्षेपादिदमेव लक्षणम् । दिगन्यत्वे सति विशेषगुणानाधिकरणविभुत्वं वा कालत्वं यौगपद्यप्रत्ययासाधारणनिमित्तत्वमयौगपद्यप्रत्ययासाधारणनिमित्तत्वं क्षिप्रप्रत्ययासाधारणनिमित्तत्वं वेत्याद्यूह्यम् ।

ननु कालासिद्धौ आश्रयासिद्धानि लक्षणानीति चेत् न परत्वापरत्वविशेषगुणादेव तत्सिद्धेः । भवति हि

---

(१) निरसनीयत्वात्-पा० २ पु० ।

युवानमवधिं कृत्वा स्थविरे परप्रत्ययः । स्थविरं चावधिं कृत्वा यून्यपरप्रत्ययः । स च परत्वापरत्वलक्षणगुणविशेषाधानः परत्वापरत्वे च जन्यत्वे(१) सति कादाचित्कत्वात् अत एवासमवायिकारणसापेक्षे तदसमवायिकारणं च न रूपरसगन्धस्पर्शानामन्यतमत् पृथिव्यप्तेजोवायुमनस्सुप्रत्येकं व्यभिचारात् । न च मनसि परत्वोत्पत्तौ प्रमाणाभावात् स्पर्शवन्मात्रवृत्तित्वात् तस्य स्पर्श एवासमवायिकारणं स्यादिति वाच्यम् स्पर्शोत्कर्षाद्यननुविधानात् स्पर्शस्य विजातीयगुणासमवायिकारणत्वानभ्युपगमाच्च । शब्दबुद्ध्यादीनां च प्रसङ्गबाधितत्वात् गुरुत्वद्रवत्वस्नेहादीनां च वायुवृत्तिपरत्वापरत्वे व्यभिचारात् संयोगोऽसमवायिकारणं बोध्यव्यः(२) ।

ननु संख्यादीनामप्यसमवायिकारणत्वसंभवात् कथमयं परिशेष इति चेत् न विभुवृत्तिषु गुणेषु संयोगस्यैव स्वविजातीयसामान्यगुणासमवायिकारणत्वस्वीकारात् । विभुसंयोगोऽसमवायिकारणं परत्वापरत्वयोरत्र किं नियामकमिति चेत् सत्यं बहुतरतपनपरिस्पन्दान्तरितजन्यत्वबुद्धत्वमल्पतरतपनपरिस्पन्दान्तरितजन्यत्वबुद्धि-

---

(१) चानित्यत्वे-पा० २ पु० ।
(२) वाच्यम्-पा० २ पु० ।

स्वगपेक्ष्य परत्वापरत्वयोरुत्पत्तिर्वाच्या अन्वयव्यतिरेकाभ्यां तथैवावधारणात् सा च सन्निकृष्टबुद्धिर्विप्रकृष्टबुद्धिः सूर्यक्रियोपनयनद्वारा स्यात्। तथा च युवपिण्डस्थविरपिण्डयोर्मार्तण्डक्रिया मार्तण्डसंयोगिना द्रव्येण केनोपनेयात् तदुपनये प्रत्यासत्त्यपेक्षणात् तादृशं च द्रव्यं विभु पर्यवस्यति। न चाकाशमात्मा वा तथा स्यात् किं कालकल्पनयेति वाच्यम् आकाशस्य आत्मनो वा परधर्मोपनायकत्वे सर्वधर्माणां सर्वत्रोपनयप्रसङ्गः। न च कालेऽप्येवं तस्य नियतपरधर्मोपनायकत्वैव कल्पनात्। वस्तुतो नाकाशात्मानौ सूर्यक्रियोपनायकौ विशेषगुणवत्त्वात् पृथिव्यादिवत्। न च तत्राव्यापकत्वमुपाधिः दिशि साध्याव्यपकत्वात्। न च साधनावच्छिन्नसाध्यव्यापकता अतिप्रसञ्जकतया सूर्यगत्युपनायकत्वसिद्धौ पक्ष एव साध्याव्यापकत्वात्। एवं च कार्यैकार्थसमवायलक्षणया प्रत्यासत्त्या युवपिण्डकालसंयोगोऽसमवायिकारणमपरत्वोत्पत्तौ स्थविरपिण्डकालसंयोगश्च परत्वोत्पत्तावपीति सिद्धम्। एवं यौगपद्यादिप्रत्ययोऽपि काललिङ्गं भवति हि युगपज्जातोऽयुगपज्जातश्चेत्यादि तत्र युगपदित्येकस्मिन् काल इति एकसूर्यगत्यवच्छिन्ने काल इति या-

वत् सा तु सूर्यगतिर्घटादौ विशेषणत्वेन सम्बन्धमन्तरेण न भासते इति तत्र संयुक्तसंयुक्तसमवायः सम्बन्धो वाच्यः पिण्डसंयुक्तः कालस्तत्र संयुक्तः सूर्यस्तत्समवेतक्रियोपनायकत्वेनापि(१) कालसिद्धिः । न च क्रियया समं विशेषणतासम्बन्ध एवास्तामिति वाच्यम् विशेषणतासम्बन्धस्य सम्बन्धान्तर्गर्भत्वनियमात् । अभावभूतलयोर्न तथेति चेत् न भावगर्भत्वाद्याप्तेः । ज्ञानेन तथेति चेत् न तदन्यत्वेन विशेषणात् । क्रियया समं साक्षात्सम्बन्ध एव घटादावस्तीति चेत् न तथा सति घटादौ चलतीति प्रत्ययप्रसङ्गात् । तेन काल एव सम्बन्धघटकः सम्बन्धो वा मार्तण्डक्रियया घटादौ वाच्यः । ननु प्रतीतः कालो विशिष्टप्रत्ययं जनयेत् विशिष्टप्रत्ययेन च कालज्ञानमित्यन्योन्याश्रय इति चेत् न स्वरूपसतैव कालेन सम्बन्धेन विशिष्टप्रत्ययजननात् । वैशिषिकमते समवायस्यातीन्द्रियत्वात् नैयायिकानामपि मम शरीरमित्यत्रादृष्टस्याज्ञायमानस्यैव सम्बन्धत्वाभ्युपगमात् । क्षणादयश्च कालोपाधयो न तु तदनुरोधात् कालनानात्वं तत्र कालोपाध्यव्यापकः कालोपाधिः क्षणः । स्वाधेयकादाचित्काभावप्रतियोग्यनाधा-

(१) तत्समवेता क्रिया तेन क्रियोपनायकत्वेनापि-पा० २ पु० ।

रः कालोपाधिर्वा उपाधिश्च गुणप्रागभावावच्छिन्नं द्रव्यम् द्रव्यगुणप्रागभावयोरनेककालवृत्तित्वे ऽपि तदुभयवैशिष्ट्यं क्षणव्यवहारहेतुः कार्यप्रागभावोपहिता सामग्री वा क्षणव्यवहारहेतुः(१) उपाधीनामननुगमे ऽपि कालोपाध्यव्यापककालोपाधित्वेनानुगमात् । एवं वर्तमानत्वादयोऽपि कालोपाधय एव । घटस्य हि स्वप्रागभावकालावच्छिन्नः कालो भविष्यत्कालः स्वध्वंसावच्छिन्नस्तु भूतकालः स्वध्वंसप्रागभावावच्छिन्नो वर्तमानकालः स्वावच्छिन्न इति यावत् । तेन वर्तते व्योमेत्यादि समाहितं भवतीति दिक् ॥

अथ दिक् । स्पन्दविषयकापेक्षाबुद्धिजन्यपरत्वापरत्वासमवायिकारणसंयोगानाश्रयत्वे सति विशेषगुणासमानाधिकरणमहत्त्वाश्रयत्वं(२) दिक्त्वम् । संयोगविषयकापेक्षाबुद्धिजन्यपरत्वासमवायिकारणसंयोगाधिकरणत्वे सति मूर्त्यनधिकरणत्वम् । एवमपरत्वप्रक्षेपादूह्यम् । कालान्यत्वे सति विशेषगुणासमानाधिकरणसंयोगाधिकरणामूर्तत्वं महत्त्वाश्रयत्वे सति विशेषगुणासमानाधिकरणसंयोगाधिकरणत्वे सति स्पन्दगोचरापेक्षाबुद्धिजन्यपरत्वासमवायिकारणसंयोगानधिकरणत्वम् । वि-

(१) क्षणोपाधि-पा० २ पु० । (२) महत्त्वप्रत्ययत्वं-पा० २ पु० ।

शेषगुणाधिकरणानधिकरणमहत्त्वाधिकरणत्वे सति कालप्रतियोगिकान्योन्याभावाधिकरणत्वं विशेषगुणत्वावच्छिन्नप्रतियोगिकात्यन्ताभावसमानाधिकरणकालप्रतियोगिकान्योन्याभावसमानाधिकरणमहत्त्वाधिकरणत्वं वा महत्त्वसमानाधिकरणविशेषगुणत्वावच्छिन्नप्रतियोगिकात्यन्ताभावाधिकरणत्वे सति स्पन्दगोचरापेक्षाबुद्धिजन्यपरत्वासमवायिकारणसंयोगानधिकरणत्वं विशेषगुणासमानाधिकरणैकत्वाश्रयत्वे(१) सति क्रियानुपनायकं निष्क्रियद्रव्यत्वं वा(२) विशेषगुणवन्निष्ठान्योन्याभावप्रतियोगित्वे सति कालमनःसंयोगानधिकरणद्रव्यत्वं वा प्राचीव्यवहारासाधारणकारणत्वे सति साधारणकारणत्वं वा एवं दिगन्तरप्रक्षेपादूह्यम् ।

दिगसिद्धावाश्रयासिद्धान्येतानि लक्षणानीति चेत् न प्राच्यादिव्यवहारान्यथानुपपत्त्या तत्सिद्धेः तथाहि यदपेक्षया या सूर्योदयसन्निहिता(३) दिक् सा तदपेक्षया प्राची या यदपेक्षया सूर्यास्ताचलसन्निहिता सा तदपेक्षया प्रतीची सन्निधानं च संयुक्तसंयोगाल्पीयस्त्वं संयुक्तसंयोगाश्चाङ्गुल्यादिप्राचीति व्य-

(१) विशेषगुणसमानाधिकरणत्वानाश्रयत्वे-पा० १ पु० ।
(२) क्रियानुपनायकं निक्षिप्य द्रव्यत्वं वा-पा० २ पु० ।
(३) सूर्योदयाचलसन्निहिता-पा० २ पु० ।

पदिश्यमाने वृक्षादौ विशेषणतया भासमानाः केन-चिद्विभुना द्रव्येणोपनेयाः अविभुद्रव्याणां तदुपनयता-सामर्थ्यात् । आकाशात्मानौ च न तथा अतिप्रसङ्गकत्वा-दित्युक्तम् । कालस्तु नियमेन क्रियोपनायक(१)त्वेनैव धर्मिग्राहकमानासिद्धस्तस्य च स्वभावान्तरकल्पने पुनरति-प्रसङ्ग एवेति संयुक्तसंयोगोपनायकं यद् द्रव्यं सैव दिक् ॥

परत्वापरत्वे यथा दिशो लिङ्गे तथा वक्ष्येते । किं च कालस्य सकलप्रमातृसाधारणव्यवहारविषयविशे-षणोपनायकत्वमपि दिग्वैधर्म्यम् । वर्त्तमानादिर्हि कालः सर्वेषां वर्त्तमानादिरेव । प्राचीति प्रतिनियतेनैव पुरुषे-ण व्यवह्रियत इति भवति तद्वैधर्म्यम् । प्राचीप्रतीच्यौ निरुक्ते एव । प्राच्यभिमुखस्य पुरुषस्य वामप्रदेशावच्छिन्ना दिगुदिची तादृशपुरुषदक्षिणप्रदेशावच्छिन्ना दिग् दक्षिणा । वामत्वदक्षिणत्वे च शरीरावयववृत्तिजातिविशेषौ प्रत्य-क्षसिद्धौ । गुरुत्वासमवायिकारणकक्रियाशून्यत्वे सति तज्जन्यसंयोगाश्रया दिगधः अदृष्टवदात्मसंयोगजन्या-ग्निक्रियाशून्यतज्जन्यसंयोगाश्रया दिगूर्ध्वा । अन्तराले च दिशान्ते ते दिशावेव व्यपदेशिके यथा पूर्वदक्षिणा द-क्षिणपश्चिमा पश्चिमोत्तरा उत्तरपूर्वेति विनिमयेनाप्येत-

(१) नियतक्रियोपनायक—पा० २ पु० ।

न्नाम लाप्यं(१) तदेतौ दिक्कालौ सपूर्वोत्पत्तिमन्निमित्तकारणे इहेदानीं जाते इति प्रतीतिबलादधिकरणस्य कारणत्वात् । गेहे जातो गोष्ठे जात इति प्रतीतिबलाद्गेहगोष्ठयोरपि(२) कारणत्वं स्यादिति चेत् किं न स्यात् परं त्वनुगतरूपाभावान्न तथेति ब्रूमः । संख्यापरिमाणपृथक्त्वसंयोगविभागाः पञ्चैव गुणा एतयोरिति दिक् ॥

अथात्मा । तत्र ज्ञानानधिकरणानधिकरणजातिमत्त्वमात्मत्वम् । एवं यत्नानधिकरणानधिकरणजातिमत्त्वम् इच्छानधिकरणानधिकरणजातिमत्त्वं शब्दस्पर्शाधिकरणानाधिकरणविशेषगुणसमानाधिकरणजातिमत्त्वं मूर्तिव्यधिकरणगुणाधिकरणानधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं वा प्रत्यक्षपरममहत्त्वाश्रयत्वं वा मानसैकत्वाश्रयत्वं वा मनोमात्रग्राह्यगुणवत्त्वं वा बहिरिन्द्रियाप्रत्यक्षप्रत्यक्षविशेषगुणवत्त्वं वा सुखसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा एवं दुःखादिप्रक्षेपादूह्यम् ।

अस्य गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुख(३)दुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्दशसं-

---

(१) नियमेनाप्येतन्नाम वोच्यम्—पा० २ पु० ।

(२) गेहगोष्ठादीनामपि—पा० २ पु० ।

(३) ज्ञानसुख—पा० २ पु० ।

ख्याका संस्कारश्च भावनाख्यः । तत्र ज्ञानसुख-
दुःखेच्छाद्वेषप्रयत्नाः प्रत्यक्षसिद्धाः धर्माधर्मभावना-
स्त्वतीन्द्रियाः संख्यापरिमाणे अपि प्रत्यक्षे इत्येके ।
अस्यैव कर्तृत्वं भोक्तृत्वं च कर्तृत्वं कृतिमद्वृत्तिजा-
तिमत्त्वं वा उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिम-
त्त्वम् वा । ज्ञानेच्छाप्रयत्नानां यौगपद्याभावे ऽपि
ज्ञानजन्येच्छाजन्यकृतिमत्त्वमित्यर्थः । कृतिमात्र-
समवायित्वे ऽन्योद्देशेन क्षिप्तनाराचमृतगवादिवधक-
र्तृत्वापत्तिः । न चैवमेवमेवास्त्विति वाच्यं प्रायश्चित्तवै-
षम्योपदेशानर्थक्यप्रसङ्गात् । भोक्तृत्वं च भोगस-
मवायः भोगश्च समानकालीनसमानाधिकरणसाक्षा-
त्कारविषयताव्याप्यजातिमत्साक्षात्कारः । सुखत्व-
दुःखत्वे हि समानकलीनसमानाधिकरणसाक्षात्का-
रविषयताव्याप्ये न हि सम्भवति सुखं दुःखं वा स्वो-
त्पत्त्यव्यवहितोत्तरकालीनसाक्षात्काराविषयः तयोरुत्प-
न्नमात्रवेद्यत्वाभ्युपगमात् ।

सुखवत्त्वमस्यासिद्धं सुखस्वरूपत्वादिति चेत् न
अहं सुखीत्यनुभवात् अन्यथाऽहं सुखमिति स्या-
त् । एवं तर्हि नित्यं विज्ञानमानन्दं ब्रह्मेति
श्रुतिविरोध इति चेत् न श्रुतेरानन्दवत्त्वाधिगतेः

मत्वर्थीयाच्प्रत्ययादानन्दशब्दात्तथैव प्रतीतेः । अन्यथा नपुंसकलिङ्गत्वानुपपत्तेः । छान्दसत्वाद्यमदोष इति चेत् न उक्तैवोपपत्तेः अहं सुखीत्यादिप्रत्ययोपलम्भाच्च । विज्ञानमिति सामानाधिकरण्यश्रुतेर्ज्ञानत्वमनुपपन्नमिति चेत् न अहमज्ञासिषमहं जानाम्यहं ज्ञास्यामीति ज्ञानक्रियाया भेदेनैवोपलम्भात् । अहं च्छिनद्मीतिवत् विज्ञानशब्दस्य विजानातीति कर्तृव्युत्पत्तेः । कथमसौ नित्य इति चेत् न योऽहमद्राक्षं सोऽहं स्पृशामीति योऽहमस्प्राक्षं सोऽहं पश्यामीति प्रत्यभिज्ञानबलात् । लूनपुनर्जातकदलीकाण्डादिप्रत्यभिज्ञानवद् भ्रान्तमिदमिति चेत् न तत्र विरुद्धधर्माध्यासेन भेदासिद्धौ भ्रान्तत्वकल्पनात् इह तु तथानवसायात् । प्रत्यभिज्ञानात् स्थैर्यमात्रं न तु नित्यत्वमपि सिध्यतीति चेत् सत्यम् जातमात्रस्य बालकस्य स्मितकम्परुदितैरनुमितानां हर्षभयशोकानां पूर्वजन्मानुभूतनिमित्तस्मृतिमन्तरेणानुपपत्तेः एतत्पूर्वं तत्पूर्वमित्यनादित्वसिद्धौ अनादिभावस्य चानन्तत्वात् । तथा च पारमर्षं सूत्रं "पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्ते"रिति कश्चिद्विद्वान् कश्चिन्मूर्खः कश्चिदुच्चाभिजनः कश्चिन्नीचाभिजन इत्यादिप्रतिनियता-

दृष्टाधीनव्यवस्थादर्शनाच्च नानात्मानः एकत्वे व्यवस्थानुपपत्तेः । औपाधिकीयं व्यवस्थेति चेत् न अदृष्टादन्यस्योपाधेरदर्शनात् अदृष्टस्य च प्रत्यात्मनियतभोगसाधनत्वेन प्रत्यात्मनियतत्वात् ।

सोऽयं द्विविधः क्षेत्रज्ञः सर्वज्ञश्चेति । द्वितीयं न मृष्यामह इति चेत् न क्षितिः सकर्तृका कार्यत्वात् यद् यत् कार्यं तत् तत् सकर्तृकं यथा घटः सकर्तृकत्वव्याप्यकार्यत्ववती चेयं तस्मात् सकर्तृका इत्यस्मदादिविलक्षणकर्तृसिद्धेः । अङ्कुरादौ सन्दिग्धानैकान्तिकमिदमिति चेत् न तत्राप्यनेनैव हेतुना गृहीतव्याप्तिकेन साध्यसिद्धेः(१) । तत्र क्षितावेव सन्दिग्धानैकान्तिकत्वमिति चेत् न तत्रापि विशिष्टहेतुमत्तया साध्यसिद्धेः । एवं सत्यन्योन्याश्रय इति चेत् न क्षित्यङ्कुरावादाय समूहालम्बनानुमितिसम्भवात् । प्रतिज्ञायामविषयीभूतमङ्कुरमादाय कथं साध्यसिद्धिरिति चेत् न सन्दिग्धसाध्यवत्त्वस्यैव तन्त्रत्वे प्रतिज्ञाविषयत्वस्यातन्त्रत्वात् । तथा चोक्तं नहि पक्षे पक्षसमे वा व्यभिचार इति । अस्मदादिना सिद्धसाधनमत्रेति चेत् न अस्मदादेः क्षितिं प्रत्यकर्तृकत्वात्(२) । उपादानगोचरापरो-

(१) तत्सिद्धेः–पा० २ पु० । (२) प्रति कर्तृत्वाभावात्–पा० २ पु०।

क्षज्ञानचिकीर्षाकृतिमत्त्वं हि तत् । अदृष्टद्वारा तथा स्यादिति चेत् न क्षितिद्व्यणुकस्य परमाणुरुपादानं तद्गोचरेण साक्षात्कारेणादृष्टद्वारापि क्षितिजनकत्वसम्भवात् । कर्तृमात्रसिद्धावपि कथं नित्यसर्वज्ञसिद्धिरिति चेत् न पक्षधर्मताबलेन तत्सिद्धेः द्व्यणुकमारभ्य भूगोलपर्यन्तं क्षित्युपादानाभिज्ञः सर्वज्ञ एव स्यात् । तथा च तं प्रकारमादाय कथं प्रतीतिः पर्यवस्येत् व्याप्तिरमुं विशेषं न सहत इति विशेषविरोध इति चेत् न पक्षधर्मताबललभ्यं विशेषमादाय विशेषविरोधश्चेत् तदा सर्वानुमानोच्छेदप्रसङ्गात् । ज्ञानमनित्यमेवेति व्याप्तेर्नित्यं ज्ञानं न सहत इति चेत् न व्याप्तेरस्मदादिज्ञानविषयत्वात् । नित्यज्ञानस्योपस्थित्यनुपस्थितिद्वयविरोधात्(१) । ज्ञानत्वमनित्यवृत्तिरिति व्याप्तिरिति चेत् न उक्तानुमानबलेन नित्यज्ञानसिद्धावेव व्याप्तिभङ्गात् । उक्तव्याप्तिबलात् तदेव न सिध्यतीति चेत् न उक्तव्याप्तेः प्रकृतानुमाने दोषत्वानुपपत्तेः । अस्तु तर्हि त्वदुक्तानुमाने बाध इति चेत् न परमात्मनोऽयोग्यत्वेन प्रत्यक्षबाधानुपपत्तेः । व्यापकानुपलब्धिबाधस्तु शङ्काप्रथमप्रवर्तरेऽपि यदि शरीरित्वं कर्तृत्वव्या-

---

(१) अनुपस्थितिद्वयोरविरोधात्—पा० २ पु० ।

पकं स्यात् न त्वेवं । यः कर्ता स शरीर्य्येवेति व्याप्ति-
रस्तीति चेत् न शरीरानिष्पाद्यकार्ये कर्तृत्वोपाधिवि-
श्रान्तत्वाद्व्याप्तेः । एवं सति शशे शृङ्गं सेत्स्यतीति
चेत् किन्न सिद्ध्येद् यदि योग्यस्थानाभिव्यङ्ग्यत्वनियमः
शृङ्गे न स्यात् । अयोग्यमेव हि तत्र तत् स्यादिति
चेत् न कर्तृत्वे कार्यत्ववच्छशशृङ्गसाधकस्य हेतोरनुप-
लम्भात् । पशुत्वादिकमेवास्तीति चेत् न स्वशिरःशृ-
ङ्गसिद्धिसाधारणस्य हेतोर्जिज्ञासितत्वात् तत्र चोक्त-
हेतोरभावात् । तत्र प्राणित्वादिकमेव हेतुरिति चेत् तर्हि
बाधकमपश्यतस्तत्र किं न स्यादिति । अस्तु तर्हि
व्याप्यत्वासिद्धिरिति चेत् न सहचारदर्शनव्यभिचारा-
दर्शनाभ्यां घटादावेव व्याप्तिसिद्धेः । तत्र शरीरजन्य-
त्वमुपाधिरिति चेत् न साधनसाध्यानिर्विशेषितत्वादुपा-
धेः(१) आकाशादौ जन्यत्वमात्रव्यावृत्त्यैव कर्तृत्वव्या-
वृत्तेर्दृष्टत्वात् शरीरविशेषणस्य व्यर्थत्वात् । अत एव
क्षित्यादिकं न सकर्तृकं शरीराजन्यत्वादिति सत्प्रतिप-
क्षोऽपि निरस्तः । अन्यथा नीलधूमवत्त्वादीनामपि हेतुत्वं
स्यात् । तत्र को दोष इति चेत् व्याप्यत्वासिद्धि-
रिति गृहाण । अथ विशिष्टे ऽपि व्यभिचाराभावा-

(१) साधनविशेषितत्वादुपाधेः-पा० १ पु० ।

द्रव्याश्रितत्वेनैवेति चेत् न व्याप्तिसत्त्वेऽपि विशिष्टधूमत्वस्य गौरवेण व्याप्यतानवच्छेदकत्वात्(१)। अजन्यत्वमात्रं यद्युपादीयेत तदा स्वरूपासिद्धिरिति। विशिष्टमुपादीयत इति चेत्(२) न व्यभिचारवारणार्थमेव विशेषणोपादानौचित्यात्॥

अथ मनः। स्पर्शरहितत्वाभाववत्त्वे सति मूर्तत्वं मनस्त्वं विशेषगुणासमानाधिकरणद्रव्यवृत्तिजातिमत्त्वं वा आरम्भकसंयोगानधिकरणाणुत्वं वा महत्त्वसमानाधिकरणद्रव्यत्वव्याप्यविभुत्वोपाध्यनधिकरणद्रव्यत्वं वा विशेषगुणासमानाधिकरणपरत्वाश्रयत्वं वा ज्ञानासमवायिकारणसंयोगाधारमूर्तत्वं वा विशेषगुणासमानाधिकरणसंस्कारवत्त्वं वा। एवमपरत्वप्रक्षेपादूह्यम्। विशेषगुणवद्वृत्तिसंस्कारवद्वृत्तिजातिमत्त्वं वा। संस्कारस्थाने परत्वापरत्वे दातव्ये। स्पर्शवद्वृत्तिद्रव्यत्वव्याप्यातीन्द्रियजातिमत्त्वं वा ज्ञानासमवायिकारणसंयोगाधारमूर्तत्वं वा विशेषगुणानधिकरणेन्द्रियत्वं वा(३)। तदेतत्संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसं

(१) व्यापकत्वेनानवच्छेदकत्वात्—पा० २ पु०।

(२) विशिष्टमात्रमुपात्तमिति चेत्–पा० २ पु०।

(३) विशेषगुणासमानाधिकरणेन्द्रियत्वं चेत्याद्यधिकम्-पा०२ पु०।

स्कारवत् आत्मविशेषगुणासमवायिकारणसंयोगवत् । ननु ज्ञानमेव ज्ञानासमवायिकारणं किन्न स्यात् सुखादि वा सुखादिज्ञानासमवायिकारणमस्तु कार्यैकार्थसमवायिप्रत्यासत्तेस्तुल्यत्वादिति चेत् न आत्मविशेषगुणान् प्रति तत्तद्विजातीयानेकासमवायिकारणकल्पनायां गौरवात् न सुखादीनामसमवायिकारणत्वं किं च तदा जागराद्यज्ञानं कथं स्यात् चिरनष्टस्यासमवायिकारणत्वाभावात्(१) । एवं सुखादावपि द्रष्टव्यम् ।

तदेतद्बुभुत्साप्रणिधानाभ्यामदृष्टेन वा संचार्यते । मनोवहनाड्याः प्रत्यक्षतया बुभुत्साजनितेन प्रयत्नेन तत्र क्रियोत्पाद्यते । क्रियया च नाड्यां वेगो वेगे च सति स्पर्शवद्वेगवन्नाडीसंयोगादभिहतं नुन्नं वा मनोऽभिमतविषयग्राहिणा इन्द्रियेण सम्बध्यते । न च मनोवहनाडीगोचरप्रयत्नानुपपत्तिः जलपानादौ तत्तन्नाडीगोचरप्रयत्नाभ्युपगमात् । रोमन्थेन मृगादीनामशितपीतस्यैकनाडीतः आकृष्य नाड्यन्तरानुप्रवेश-

(१) गौरवात् किं च ज्ञानं प्रति ज्ञानस्य चेदसमवायिप्रत्यासत्तेस्तुल्यत्वादिति चेत् न आत्मविशेषगुणान् प्रति तत्तद्विकारणत्वाभावात्—पा० २ पु० ।

दर्शनात् । तदेतन्नाडीप्रत्यक्षतामन्तरेण कथमुपपद्यताम् अदृष्टसहकृतेन त्वगिन्द्रियेणैव प्रत्यक्षत्वसंभवात् । तदेतत् सर्वज्ञानजनकम् । अनुमित्यादीनामपि मानसत्वप्रसङ्ग इति चेत् न नेदमभिन्नं जातिसाङ्कर्यमेवं सति स्यादिति चेत् न मानसत्वजातेरनुमित्यादिव्यापकत्वात् । ज्ञानत्वेन सहान्यूनानतिरिक्तव्यक्तिकता स्यादिति चेत् न ईश्वरज्ञाने मानसत्वासत्वात् । यद्वा मनसः कारणत्वमिन्द्रियत्वेन मनस्त्वेन च एवं मनस्त्वेन कारणतायां न मानसत्वं किं त्विन्द्रियत्वेन मनसो जनकता यत्र सुखादिसाक्षात्कारे तत्रैव मानसत्वमिति । ननु मनसोऽणुत्वे सर्वमिदं स्यात् तदेव च नास्ति तथाहि मनो विभु विशेषगुणशून्यद्रव्यत्वात् कालवत् निःस्पर्शद्रव्यत्वात्, तद्वदेव द्रव्यानारम्भकानन्त्याव-यविद्रव्यत्वात्, तद्वदेव नित्यत्वे सतीन्द्रियत्वादाकाशवत्, ज्ञानासमवायिकारणसंयोगाधारत्वात् आत्मवत्, विभुविशेषगुणसाक्षात्कारकारणत्वात् श्रोत्रवदिति चेत् न सर्वेषामनुकूलतर्कशून्यत्वात् प्रतिकूलतर्कप्रतिहतत्वात् सत्प्रतिपक्षितत्वात् धर्मिग्राहकमानवाधितत्वाच्च । न हि विशेषगुणशून्यतायां(१) मूर्तत्वेन विरोधो

(१) शून्यत्वे-पा० २ पु० ।

विरोधे मानाभावात्। एवं निःस्पर्शद्रव्यत्वादीनामपि द्रष्टव्यम्। व्यासङ्गानुपपत्तिश्चाप्रतिकूलतर्कः(१)। वैभवे सति सकलेन्द्रियसम्बन्धे सति व्यासङ्गो न स्यात् स चानुभवसिद्धः यदा त्वयाहं बाधितस्तदा नृत्यदर्शनव्यासक्तोऽहमासमित्यनुभवात्। बुभुत्साविरहात्तदुपपत्तिरिति चेत् न सत्यामपि बुभुत्सायां तदनुभवात्। नृत्यदर्शनव्यासक्तोऽहं बुभुत्सितमपि त्वयोच्यमानं नाकलयामीत्यनुभवात् किञ्च प्रणिधानं मनोवैभवे ऽनुपपन्नम् तच्चाभिमतार्थग्राहिणा(२) बहिरिन्द्रियेण मनःस्थिरीकरणानुकूलः प्रयत्नः सर्वेन्द्रियसम्बन्धे ज्ञानयौगपद्यं च स्यात्। भवत्येव दीर्घशष्कुलीभक्षणस्थल इति चेत् न तत्रापि क्रमानुमानात्। तत्र यौगपद्ये किं बाधकमिति चेत् व्यासङ्गानुपपत्तिरेव। एवं ज्ञानकरणमेकदा एकत्रैकमेव ज्ञानं जनयतीति करणधर्मसामर्थ्यान्न यौगपद्यमिति चेत् तर्हि सर्वेषामिन्द्रियाणां विषयसम्बन्धे ज्ञानमेकमेव किन्न स्यात्। परस्परप्रतिबन्धान्न भवतीति चेत् न सम्भूय जनने प्रतिबन्धकत्वानुपपत्तेः। तत्र चाक्षुषत्वादिजातिविरोधः स्यादिति चेत्

(१) अनुकूलस्तर्क-पा० २ पु०।
(२) तच्चानुमतानुग्राहिणा-पा० २ पु०।

न ज्ञानसामग्न्याः कार्यविरोधानाकलनात् । किञ्च चन्दनादिसुखं प्रादेशिकं नोपलभ्येत सकलशरीरावच्छेदेन तदसमवायिकारणस्यात्ममनःसंयोगस्याविद्यमानत्वात् । निमित्तचन्दनादिप्रादेशिकत्वाधानं सुखादिप्रादेशिकत्वं निमित्तवाद्यप्रादेशिकत्वात् शब्दप्रादेशिकत्ववत् । अत एव निदाघे सरसि मग्नस्य सकलशरीरावच्छेदेनैव सुखमिति चेत् न विभुकार्यमसमवायिकारणावच्छेदेनोत्पद्यत एवेति नियमात् तदवच्छिन्नदेशापरिहारः कदापि न स्यादित्युक्तत्वात् । न चैवमस्माकमप्यनुद्देश्यत्वं स्यादिति वाच्यम् अधिकदेशत्वेप्युक्तनियमनिर्वाहात् । किञ्च सुखादिकं मूर्तसंयोगासमवायिकारणकगुणवृत्तिगुणत्वावान्तरजातियोगिनित्यवृत्त्यनित्यविशेषगुणत्वात् शब्दवत् पाकजवच्चेति सत्प्रतिपक्षोऽपि । अत्र च नित्यवृत्तिविशेषणादवयविस्नेहे ऽनित्यविशेषणात् परमाणुस्नेहे विशेषपदात् परमाणुद्वित्वादौ न व्यभिचारः । जातिगर्भत्वाच्च साध्यस्य न शब्दजशब्दे व्यभिचारः । किञ्च मनो मूर्तं विभुसंयोगाधिकरणत्वात् विभुविभागाश्रयत्वात् । न चाजसंयोगेनाश्रयासिद्धः तथा चाजविभागस्यापत्तावुभयोच्छेदात । विरुद्धधर्मिग्राहकमानबाधिता अपि

वैभवसाधकहेतवः । तथाहि व्यापकमनवच्छिन्नमेव यदि मनस्तदातिप्रसङ्गः स्यादित्याकाशे कर्णशष्कुली-वदवश्यमवच्छेदकं वाच्यं तच्च न शरीरं तदवयवमात्रं वा नानावयवाद्यवच्छेदेनाव्याप्यवृत्तिसुखाद्यनुपलब्धेः । तत्र सूक्ष्ममतीन्द्रियमुपाधित्वेन कल्पनीयं तथा च तदेव मन इति मनसोऽणुत्वसिद्धेः । किञ्च नृत्यदर्शनासक्तस्य देवदत्तस्य स्वस्वविषयसम्बद्धानीन्द्रियाणि घ्राणरसनत्व-क्श्रोत्राणि स्वविषयसाक्षात्कारजनकसंयोगशून्यानि तदानीं स्वविषयसाक्षात्काराजनकत्वात् अन्धकारस्थघ-टवदित्यणुत्वसिद्धेः परिशेषादिह मनःसंयोगाभाव एव वाच्यः। स च मनसोऽणुत्वमन्तरेणानुपपन्नमिति दिक् ॥

नन्वस्ति तमोऽपि द्रव्यं क्रियावत्त्वात् रूपवत्त्वात् परत्वापरत्वाश्रयत्वाच्च । न च क्रियावत्त्वमसिद्धं चलति-च्छायेति प्रत्ययात् नीलं तम इति प्रत्ययाच्च रूपवत्त्वमपि सिद्धम् इदं तमः परमिदं तमोऽपरमिति प्रतीतेश्च परत्वा-परत्वे अपि तदुक्तम् ।

तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥

इति चेत् मैवं रूपवत्त्वे क्रियावत्त्वे च बाह्यालोकनिरपेक्ष-चक्षुर्वेद्यत्वानुपपत्तेः। किञ्च रूपवत्त्वे स्पर्शवत्त्वमपि स्यात्।

अस्त्येवासावनुद्भूत इति चेन्न रूपोद्भवे स्पर्शोद्भवध्रौव्यात्। पृथिव्यामियं व्याप्तिरिदं तु दशमद्रव्यमिति चेत् न नीलरूपवत्त्वसिद्धौ पार्थिवत्वसिद्धेः। पृथिव्यामपि नायं नियमो धूमे रूपोद्भवेऽपि स्पर्शानुद्भवादिति चेत् न गोलकावच्छेदेन धूमस्पर्शस्यापि ग्रहात्। प्रभायां व्यभिचार इति चेत् न प्रभायास्तेजस्त्वात्। इन्द्रनीलप्रभायां तर्हि कथं नीलिमप्रतीतिरिति चेत् न प्रभानुगतपार्थिवभागस्यैव तत्र नीलिमोपलम्भात्। तदेव पार्थिवमुद्भूतरूपमनुद्भूतस्पर्शमिति चेत् न इन्द्रनीलमणेर्नीलिम्नोऽनुभूयमानस्य प्रभायामारोपात्। सर्वदा कथं तत्र नीलिमधीरिति चेत् न मणेरेव तत्र दोषत्वेन सदा तथारोपात्। नीलरूपारोपोऽपि कथं तमसि बाह्यालोकमन्तरेणेति चेत् न स्मर्यमाणनीलरूपारोपे तदपेक्षाया अभावात् फलबलात् तथैव कल्पनात्(१)। यद्वा पीतादिव्यावृत्तिनिबन्धन एव नीलव्यवहारः सपर्योरिव सव्यवहारे गौडानां चलतीति धीरपि भ्रान्ता आवरकद्रव्ये चलति यथायथा तेजसोऽसान्निध्यं तथातथा तत्प्रलयोपपत्तेः। आवरकद्रव्यगतेरेव

---

(१) नीलरूपस्यारोपस्थलस्य बाह्यालोकं विनापि विशेषणतयाऽपि ग्रहणात् प्राधान्येनैव तद्ग्रहे तदपेक्षणात्—अधिकं २ पु०।

तत्रारोपाद्धा । परत्वादिधीरप्यवच्छेदभेदमादाय । ननु तामसमेवेन्द्रियं तमोमात्रग्राहकमस्तु तस्य च न बाह्यालोकापेक्षेति चेत् न कल्पनागौरवात्(१) । तत्प्रकृतिभूतं च न तम एव तस्य निःस्पर्शत्वेनानारम्भकत्वात् । इन्द्रियारम्भकस्य शरीरारम्भकत्वनियमात् । न च तामसं शरीरमुपलभामहे । न चाभावत्वे ऽपि(२) तमसः कथं विधिमुखप्रत्ययवेद्यत्वं कथं च बाह्यालोकनिरपेक्षचक्षुर्ग्राह्यत्वं कथं च प्रतियोगिस्मरणमन्तरेण तदुपलम्भ इति चेत् नञ्पदसमभिव्याहाराभावाद्विधिमुखप्रत्ययवेद्यत्वाभिमानात् । अभावग्रहे प्रतियोगिसन्निधानानपेक्षणात् प्रतियोगिनश्च तेजसः क्वचिदनुभवात् क्वचिच्च स्मरणात् तदुपपत्तेः कन्दरास्वपि तमोव्यवहारः प्रतियोगिस्मरणसापेक्ष एव तच्चैतत्तेज.संसर्गाभावरूपं स च क्वचित् प्रागभावः क्वचित् प्रध्वंसः क्वचिच्चात्यन्ताभावः । सत्यपि प्रदीपादौ पूर्वं प्रदीपध्वंसनिबन्धनस्तमोव्यवहारः स्यादिति चेत् न यावत्तेजःसंसर्गाभावस्य तेजोऽसमवहिततेज.संसर्गाभावस्य वा तमस्त्वात् । एतत्कृत एवान्धतमसा च तमसो भेदः यावत्तेज.संसर्गाभावस्य कतिपयतेजःसंसर्गाभावस्य च भेदात् ।

(१) गौरवापत्तेः—पा० २ पु० । (२) अभावत्वमपि—पा० २ पु० ।

यत्तु प्राभाकराणां ज्ञानाभाव एव तम इति तत्तु तदा स्याद्यदि तद्दत्त्वगुणलक्षणं किञ्चिन्नोपलभत इति प्रत्ययः स्यात् किन्त्वन्धकारमुपलभ इति प्रत्ययस्तथा च सुष्ठूक्तं भाभावस्तम इति ॥

इति महामहोपाध्यायश्रीभवनाथमिश्रात्मजमहामहोपाध्यायसन्मिश्रश्रीशङ्करविरचिते कणादरहस्ये द्रव्यपदार्थः समाप्तः ॥

अथ गुणाः । तत्र नित्यद्रव्यवृत्तिवृत्तिसत्तासाक्षाद्व्याप्यजातिर्गुणत्वं तद्वत्त्वं गुणलक्षणम् विभुवृत्तिवृत्तिसत्तासाक्षाद्व्याप्यजातिर्वा गुणत्वजातौ च प्रमाणं द्रव्यत्वं कर्मावृत्तिसत्तासाक्षाद्व्याप्यजातिभिन्नं मेयत्वात् घटत्ववत् दृष्टान्तो द्रव्यत्वभिन्नत्वेनैव सिद्धः पक्षधर्मताबलाद् गुणत्वसिद्धिः । न हि द्रव्यत्वमेव द्रव्यत्वभिन्नमिति संभवति । विपक्षे बाधकाभाव इहेति चेत् न गुणत्वासिद्धौ संयोगविभागोभयसमवायिकारणत्वासमवायिकारणत्वशून्ये सामान्यवति यत् कारणत्वं तदनुगतधर्मावच्छेद्यं न स्यात् अस्ति च चतुर्विंशति(१)गुणानां स्वस्वकार्यं प्रति कारणत्वं द्वित्वद्विपृथक्त्वादीनामकारणत्वं यदुक्तं मूले तत्प्रतिनियतकार्यापेक्षया न तु स्वविषयज्ञानापेक्षयापीति तदादायापि गुणत्वसिद्धिः । यद्वा रूपं रूपत्वतद्व्याप्येतरसत्तासाक्षाद्व्याप्यजातिमत् जातिमत्त्वात् घटादिवदिति गुणत्वसिद्धिः । एवं रसादिकं पक्षयित्वा वाच्यम् । कर्मत्वं वा द्रव्यावृत्तिसत्तासाक्षाद्व्याप्यजातिभिन्नं जातित्वात्(२) घटत्वादिवत् । यद्वा रूपत्वं स्वात्यन्ताभावसमानाधिकरणसत्ताव्याप्यजातिव्याप्यं कर्मत्वान्याकाशावृत्तिजातित्वात् घटत्वादिवत् यद्वा गुणत्वमुद्देपश-

---

(१) चतुर्दश-पा० १ पु० । (२) मेयत्वात्-पा० २ पु० ।

सहकृतेन्द्रियग्राह्यमेव पद्मरागत्वादिवत् । यथा प्रभाविशेषाश्रयो मणिः पद्मराग इत्युपदेशसहकृतेनेन्द्रियेणैव पद्मरागत्वं गृह्यते तथा कर्मान्यत्वे सति सामान्यवानगुणो गुण इत्युपदेशसहकृतेनैव चक्षुषा गुणत्वमपि गृह्यत एव । तत्र पद्मरागत्वादिग्रहे नोपदेशापेक्षा किन्तु तत्पदवाच्यमात्रेणेति चेत् न प्रकृते ऽपि तथात्वाविरोधात् । कर्मान्यत्वे सतीत्यनपेक्ष्यव्यावृत्तिरतिप्रसक्तेति चेत् सत्यम् चलतीतिप्रतीतिबलात् संयोगविभागोभयासमवायिकारणत्वरूपवैलक्षण्याच्च कर्मणो गुणभिन्नत्वसिद्धौ तद्व्यावृत्तेरावश्यकत्वात् । सा च तदन्यत्वे सतीत्यनेनैव सुप्रतिपाद्या रूपादीनां च गुणभिन्नत्वासिद्धेर्गुणलक्षणे रूपान्यत्वादिना विशेषणे भागासिद्धिप्रसङ्गात् ॥

तत्र गुणाः रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः कण्ठोक्ताः सप्तदश चशब्दसमुच्चिताश्च गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः(१) सप्तेति चतुर्विंशतिः ।

रूपत्वं सामान्यविशेषो गुणत्वसाक्षाद्व्याप्यस्तद्योगाद्रूपमितरेभ्यो भिद्यते । अत्रेतरपदेन रसादीनां

(१) संस्कारादृष्टशब्दाः—पा० २ पु० ।

त्रयोत्रिंशतेर्द्रव्यकर्मसामान्यविशेषसमवायाभावानां च षण्णां ग्रहणादेकोनत्रिंशदभिधानं(१) व्यवहारो वा साध्यः प्रत्यक्षेपु रूपेषु इतरभेदः प्रत्यक्षत एव सिद्धः सामान्यावच्छेदेन तु साध्यत इति न साध्याप्रसिद्ध्यंशतः सिद्धसाधने लक्षणस्य च व्यतिरेकिण इतिकर्तव्यता पृथिव्यामुक्ता । चक्षुर्मात्रग्राह्यगुणत्वमुपाधिरेव रूपत्वमस्तु किं जात्येति(२) चेत् न रूपत्वस्यातीन्द्रियत्वापत्तेः अतीन्द्रियचक्षुर्घटितत्वात् । ग्राह्यत्वं च ग्रहणविषयत्वं ग्रहणस्य चाक्षुषत्वात् एवमपि रूपत्वस्याचाक्षुपत्वापत्तेः । उपनीतभाने मानाभावात्(३) जात्यपेक्षयोपाधेर्गुरुत्वाच्च सर्वजातिविप्लवापत्तेश्च । अतीन्द्रिये च परमाणुरूपे च त्वदुक्तोपाधेरसत्त्वात् ।

तदेतच्छुक्लाद्यनेकप्रकारकं पृथिव्युदकतेजोमात्रवृत्ति पार्थिवपरमाणुपु तेजः(४)संयोगादुत्पद्यते विनश्यति च । सलिलतेजसोः(५) परमाणुपु नित्यम् अवयविषु कारणगुणासमवायिकारणकम् कपालादिरूपात् घटा-

(१) ग्रहणमित्यूनत्रिंशदभिधानं—पा० २ पु० ।
(२) जाताविति—पा० २ पु० ।
(३) प्रमाणाभावात्—पा० २ पु० ।
(४) अग्नि—पा० २ पु० । (५) जलतेजसोः—पा० २ पु० ।

दिरूपोत्पत्तेः तत्साजात्योपलम्भात् । कचिच्चित्तं तच्च नीलपीतादिविजातीयमेव । गुणविरोधात् कथं तदुत्पत्तिरिति चेत् न तदवयवानामपि चित्रत्वात् गुणविरोधाभावात् । परमाणावपि चित्ररूपसत्त्वात् । अवयवानां कथं नीलपीतादिरूपोपलम्भो न तु चित्रस्यैवेति चेत् न चित्र एव नीलपीतभागस्योल्वणत्वात् । यद्वा घटादिचाक्षुषत्वान्यथानुपपत्त्या गुणविरोधमवधार्यापि चित्ररूपोत्पत्तिस्वीकारः । शुक्लः पट इत्यादिसामानाधिकरण्याद्रूप(१)रूपिणोः भेदोऽस्त्विति चेत् न अन्धेनापि त्वचा रूपग्रहणप्रसङ्गात् रूपानुपलम्भवद् द्रव्यानुपलम्भापत्तेः(२) । अन्धेन रूपं गृह्यत एव रूपत्वशुक्लत्वादि परं न गृह्यत इति चेत् न व्यक्तियोग्यतायां रूपत्वादिग्रहे प्रतिबन्धकाभावात् । किं च शुक्लमानयेत्युक्तः पटमानयेत् पटमानयेत्युक्तो यं कश्चिच्छुक्लमानयेत् । अवयविनि सत्येव रूपोत्पादविनाशदर्शनाद्विरुद्धधर्माध्यासादपि रूपरूपिभेदात् । उत्पादविनाशधीः समवायगोचरेति चेत् न तथा सति रूपसमवायो नष्ट इति धीप्रसङ्गात् । वैशेषिकदर्शने नैवमिति चेत् न रूपादौ मास्तु द्रवत्वादौ

(१) सामानाधिकरण्यबलाद्रूप—पा० २ पु० ।

(२) द्रव्यानुपलम्भप्रसङ्गात्—पा० २ पु० ।

तथोपलम्भेन गुणगुणिभेदसिद्धौ अन्यत्रापि तथा कल्पनात् । अत्र सामानाधिकरण्यप्रतीतिर्बाधिकेति चेत् न मतुब्लोपादच्प्रत्ययाद्वा सामानाधिकरण्यव्यपदेशोपपत्तेः शुक्लादिशब्दानां गुणगुणिवाचकतया नानार्थत्वाद्वा, यदाह गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीति । विषयस्थं रूपं बहिर्द्रव्याद्युपलम्भकमन्वयव्यतिरेकबलात्तु रूपवतां घटादीनामुपलम्भान्नीरूपाणां महतामपि वाय्वाकाशादीनामनुपलम्भात् गुणकर्मसामान्यानामपि कियतां रूपोपलम्भेनैव ग्रहणम् । उपलभ्यन्ते हि क्वापि द्रव्यसमवेताः संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्ववेगस्नेहाः कर्माणि च सामान्यानि कियन्ति च(१) रूपैकार्थसमवायात् कानिचिच्च रूपैकार्थसमवेतसमवायात् कानिचिच्च समवायादेव एतदन्येषां पुनरनुपलम्भात् । स्वगतमपि रूपं चक्षुःसहकारि आलोकरूपं च तदुक्तं स्वकीयेनैव रूपेण आलोकचक्षुषी द्रव्यं प्रकाशयत इति सगुणानामिन्द्रियभावाच्चक्षूरूपं न चक्षुःसहकारीति तन्न इन्द्रियत्वस्य द्रव्यधर्मत्वात् । सगुणत्वं स्वगुणसहकारित्वमात्रम् । न च रूपवदेव द्रव्यमुत्पद्यते विनश्यतीति वाच्यम् रूपस्य कार्यत्वे स-

(१) कियन्तिचिद्—पा० २ पु० ।

मवायिकारणापेक्षायां घटादिरेव तथा वाच्यः तच्च कारणत्वेन पूर्ववर्त्येव । रूपसाक्षात्कारश्चक्षुस्तैजसत्वसाधकः तथाहि चक्षुस्तैजसं रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वात् आलोकवत् । रूपादिष्विति प्रतिनियतेन्द्रियग्राह्याणां रूपरसगन्धस्पर्शानां ग्रहणम् । न च शुक्लत्वादिजात्यसिद्धिः शुक्लादीनामेकैकत्वान्नित्यत्वाच्चेति वाच्यं शुक्लं रूपं नष्टं रक्तमुत्पन्नमिति प्रतीतिबलात् तदनेकत्वस्यानित्यत्वस्य च सिद्धेः । न च शुक्लसमवायो नष्ट उत्पन्नश्चेति तदर्थः । एवं सति घटादीनामपि नित्यत्वप्रसङ्गः । तदुत्पादविनाशप्रतीतेः समवायविषयत्वेनान्यथासिद्धेः । साधयिष्यते च समवायस्य नित्यत्वमेकत्वं च ॥

रसनमात्रग्राह्यो गुणो रसः । मनसापि तद्ग्रहणाल्लक्षणानुपपत्तिरिति चेत न रसनेन्द्रियजन्यसाक्षात्कारविषयवृत्तिगुणत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् तेजोवृत्त्यवृत्तिपृथिवीजलवृत्तिवृत्तिप्रत्यक्षगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं वा रसत्वं गुणत्वानधिकरणानधिकरणगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं वा । सोऽयं जीवनपुष्टिबलारोग्यमरणकृशत्वदौर्बल्यकारणम् । गन्धादीनामपि रसोपग्रहेणैव जीवनादिहेतुत्वात् । आत्मविशेषगुणजनकादृष्टमनःसंयोगस्तादृशः शरीरसंयोगो वा जीवनम् ।

शरीरावयवोपचयः पुष्टिः । आयासक्षमता बलम् । धातुसाम्यावस्था आरोग्यम् । दोषधातुमलानां समतेति यावत् । ज्ञानजनकमनःसंयोगजनकस्पन्दजन्यविभाग-जन्यज्ञानजनकमनःसंयोगध्वंसो मरणम् । कृशत्वं शरीरावयवापचयः । दौर्बल्यमायासासहिष्णुता ।

षोढा चायम् । मधुराम्ललवणकटुतिक्तकषाय-भेदात् । रूपवदेव विनाशकोत्पादकनित्यत्वानित्यत्वानि रसस्यापि ॥

घ्राणमात्रग्राह्यो गुणो गन्धः । घ्राणकरणक-साक्षात्कारविषयगुणत्वव्याप्यजातिमत्त्वं गन्धत्वम् । रसवदिन्द्रियजन्यसाक्षात्काराविषयानित्यावृत्तिजातिमत्त्वं वा । स्पर्शवदिन्द्रियग्राह्यविशेषगुणवृत्तिनित्यावृत्तिजाति-मत्त्वं वा । प्रागभावानधिकरणकालानधिकरणब-हिरिन्द्रियग्राह्यशब्देतरविशेषगुणवृत्तिगुणत्वव्याप्यजाति-मत्त्वं वा ।

स चायं द्विविधः । सुरभिरसुरभिश्च । सुरभिविपरीतो गन्धोऽसुरभिः । धर्मविपरीताधर्मवत् । तेन सुरभित्वमसुर-भित्वं च गन्धत्वव्याप्ये जाती । अयोगान्ययोगव्यवच्छे-दाभ्यां पृथिवीवृत्तिः । पाषाणादावपि भस्मदशायां गन्धो-पलम्भात् गन्धवदारब्धत्वेन गन्धानुमानात् जलादौ

चौपाधिकत्वात् । उपाध्यन्वयव्यतिरेकानुविधानात् । घ्राणसहकारी घृतादिगन्धसहकृतेन घ्राणेन मृगमदादिगन्धग्रहणात् । अयं च परमाणावप्यनित्य एव अग्निसंयोगोत्पाद्यः तद्विनाश्यश्च । अवयविषु कारणगुणपूर्वकः । आश्रयध्वंसजन्यध्वंसप्रतियोगी ॥

अथ स्पर्शः । रूपव्यापकविशेषगुणत्वं स्पर्शत्वम् । नीरूपावयवीन्द्रियग्राह्यविशेषगुणवृत्तिस्नेहद्रवत्वावृत्तिजातिमत्त्वं वा । त्वगिन्द्रियमात्रकरणकसाक्षात्कारविषयविशेषगुणवृत्तिस्नेहद्रवत्वावृत्तिजातिमत्त्वं वा ।

सोऽयं त्रिविधः शितोष्णानुष्णाशीतभेदात् त्वगिन्द्रियसहकारी व्यजनादिवातसहकृतेन त्वगिन्द्रियेण स्पर्शोपलम्भात् । पृथिव्युदकज्वलनपवनवृत्तिः । अयोगान्ययोगव्यवच्छेदाभ्यां पार्थिवपरमाणुषु पाकजः सलिलादिपरमाणुषु नित्यः । अवयविषु कारणगुणपूर्वकः आश्रयनाशनाश्यः ॥

एतेषु च गुणेषु प्रत्यक्षमेव प्रमाणम् । अतीन्द्रियरूपादौ च कार्यरूपादि प्रमाणमिति ॥

अथ पाकजप्रक्रिया । तत्रादौ परमाणुष्वेव पाकजोत्पत्तिः पिठरे ऽपि वेति विचारः । तत्र विप्रतिपत्तिः । पार्थिवा अवयविरूपरसगन्धस्पर्शा अग्निसंयोगजन्या न

वा घटोऽग्निसंयोगासमवायिकारणकरूपवान्न वा अग्निसं-
योगो घटसमवेतरूपादिजनको न वा घटत्वमग्निसंयो-
गजन्यरूपसमानाधिकरणं न वा । तत्र पाकेनाग्नि-
संयोगेनावयविष्वपि रूपादिकं जन्यत इति नैयायि-
काः । तेषामयमभिप्रायः । आपाकनिक्षिप्ताना घ-
टादीनां पूर्वरूपादिविजातीयरूपाद्यनुभूयते । तत्र च पा-
कस्यैवान्वयव्यतिरेकौ दृश्येते न तु तेषां घटादीनामा-
परमाण्वन्तविभागेन द्व्यणुकपर्यन्तावयविनाशे स्व-
तन्त्राः परमाणवः पच्यन्ते । अनन्तरं द्व्यणुकादि-
क्रमेण घटपर्यन्तावयविषु नष्टेषु कारणगुणप्रक्रमेण
रूपाद्युत्पत्तिः कल्पनागौरवपराहतत्वात् । किञ्चापा-
कादुत्तारितेषु स एवायं घट इति प्रत्यभिज्ञाऽप्येवं स-
समाहिता स्यात् । सर्वास्ववस्थासु घटादीनामापाके
दर्शनमुपपन्नं भवेत् । घटाद्युपरि मूर्तान्तरवारणम-
प्येवमुपपन्नं स्यात् । संस्थानमपि प्राचीनं यत् तथोपल-
भ्यते तदप्युपपादितं स्यात् । स्याच्च तादृशरेखोपरेखादि-
वैशिष्ट्यमुपपादितम् । संख्या च परिमाणं चोपपादितं
स्यात् । अन्तःस्थितानामवयवानामग्निसंयोगाभावात्
पूर्वरूपादिरक्ताद्युत्पत्ती न स्यातामिति चेत्, न सच्छि-
द्रत्वादेवावयविनां तदुपपत्तेः । अवयविसच्छिद्रतायां

च किं प्रमाणमिति चेत् अन्तर्हितघृततैलादिस्यन्दनस्रवणयोरतत्र प्रमाणत्वात् । अनुमानाणुप्रवेशात् सर्वावयवावच्छेदेन कथं पाकः स्यादिति चेत् न अन्तःस्थितानां तण्डुलादीनामपि भस्मीभावदर्शनाद्बहुतेजोनुप्रवेशोऽनुमाननादिति ॥

अत्रोच्यते । प्रत्यभिज्ञादिकं तावत् सूचीविदलितत्रसरेणुके घटादावपि दर्शनादुभयं समाधेयम् । नहि तत्र द्रव्यं न नश्यति आरम्भकसंयोगनाशस्य द्रव्यनाशकत्वात् । यच्चोक्तं बहुतेजोनुप्रवेशात् सर्वावयवावच्छेदेन पाक इति तत् तदा स्यात् यदि तावत्तेजोनुप्रवेशेऽप्यवयवी न नश्येत् । तेजसो हि भास्वरतया अतिवेगवत्तया तीव्रतया च नोदनाभिघातयोरन्यतरः संयोगोऽवयवविश्लेषहेतुक्रियाजनक इति कथं नावयवी नश्येत् येनाग्निसंयोगेनान्तःस्थितोपलादीनामपि भस्मीभावस्तेन पिठरकं न नश्येदिति महती प्रत्याशा तथा च तेजोनुप्रवेशान्नोदनादवयवकर्म ततोऽवयवविभागस्ततस्तदारम्भकसंयोगनाशादवयविनाश इति स्वतन्त्राः परमाणव एव पच्यन्त इति स्थिते द्व्यणुकविनाशमारभ्य कतिभिः क्षणैः पुनरन्यद् द्व्यणुकमुत्पद्य रूपादिमदभवतीति शिष्यबुद्धिवैशद्याय

प्रक्रिया तत्र विभागजविभागो यैर्नेष्यते तन्मते नवक्षणा। विभागजविभागाङ्गीकर्तृमतेऽपि विभागः सापेक्ष एव विभागान्तरं जनयेत् निरपेक्षस्य जनकत्वे कर्मत्वापत्तिः संयोगविभागयोरनपेक्षकारणं कर्मेति तल्लक्षणात् । तत्र यदि द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजननं तदा दशक्षणा । अथ द्रव्यनाशविशिष्टं कालमवयवं वापेक्ष्य विभागेन विभागजननं तदैकादशक्षणा । तथाहि वह्निना नोदनादभिघाताद् वा द्व्यणुकारम्भके परमाणौ कर्म तेन कर्मणा परमाणोः परमाण्वन्तराद्विभागः तत्रश्चारम्भकसंयोगनाशस्ततो द्व्यणुकनाशस्ततः केवले परमणौ श्यामादिनिवृत्तिस्ततस्तत्रैव रक्ताद्युत्पत्तिः । अथ रूपादिमति परमाणौ द्रव्यारम्भानुगुणा क्रिया तया चाकाशादिविभागस्ततः पूर्वसंयोगनाशस्ततो द्व्यणुकारम्भकसंयोगस्ततो द्व्यणुकोत्पत्तिरथ तत्र रूपाद्युत्पत्तिरिति द्व्यणुकविनाशमारभ्य द्व्यणुके रक्ताद्युत्पत्तिर्नवमे क्षणे परमाणुरूपादिना न त्वसिंसंयोगात् अवयविनि तदनभ्युपगमात् । ननु श्यामादिनिवृत्तिक्षणे रक्ताद्युत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणा क्रियाभ्युपगम्यताम् एतावता सप्तमे ऽष्टमे वा क्षणे रक्तादयुत्पत्तिरस्त्विति चेत् न

अग्निना नुन्नेऽभिहते वा परमाणौ यत् कर्म तद्विनाश-मन्तरेण गुणोत्पत्तिमन्तरेण च तत्र परमाणौ क्रि-यान्तरानवकाशात् कर्मवति कर्मानुत्पत्तेः निर्गुणे द्रव्या-रम्भानुगुणक्रियानुत्पत्तेः तथापि परमाणौ श्यामादिनि-वृत्तिसमकालमेव रक्ताद्युत्पत्तिरस्त्विति चेत् न पूर्व-रूपादिध्वंसस्यापि रूपाद्यन्तरोत्पत्तौ कारणत्वात् कारण-स्य च पूर्ववर्त्तित्वात् ॥

अथ दशक्षणाप्रक्रिया । सा चेयमारम्भकसंयो-गविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजनने सति स्यात् । तथाहि वह्निना नोदनादभिघाताद्वा द्व्यणु-कारम्भके परमाणौ कर्म तेन परमाण्वन्तरविभाग-स्तत आरम्भकसंयोगनाशस्ततो द्व्यणुकनाशविभा-गजविभागौ ततश्च श्यामादिनिवृत्तिपूर्वसंयोगनाशौ ततो रक्ताद्युत्पत्त्युत्तरसंयोगौ ततो वह्निनोदनजन्यपरमाणु-कर्मणो विनाशस्ततस्तत्रैव परमाणावदृष्टवदात्मसंयोगाद् द्रव्यारम्भानुगुणा क्रिया ततो विभागस्ततः पूर्वसंयोग-नाशोऽथ द्रव्यारम्भकसंयोगस्ततो द्व्यणुकोत्पत्तिरथ रक्ताद्युत्पत्तिरिति दशक्षणा ।

अथैकादशक्षणा । वह्निनोदनाभिघातान्यतरे-ण द्व्यणुकारम्भकपरमाणौ कर्म ततो विभागस्ततो

द्रव्यारम्भकसंयोगनाशस्ततो द्व्यणुकनाशः ततो द्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजविभागस्ततः पूर्वसंयोगनाशस्तत उत्तरसंयोगस्ततः परमाणुकर्मनाशस्तदनन्तरमदृष्टवदात्मसंयोगात् तत्रैव परमाणौ द्रव्यारम्भानुगुणा क्रिया ततो विभागस्ततः पूर्वसंयोगनाशस्ततो द्रव्यारम्भकसंयोगस्ततो द्व्यणुकोत्पत्तिस्ततो रक्ताद्युत्पत्तिरित्येकादशक्षणा । एताश्च तिस्रः प्रक्रिया मतभेदानुविधानेन दर्शिताः विस्तरस्तु विभागजविभागव्युत्पादनावसरे दर्शयिष्यामः ॥

ननु पुनरन्यस्मादग्निसंयोगाद्रक्ताद्युत्पत्तिरिति भाष्यमनुपपन्नम् यत एकस्यैवाग्निसंयोगस्य पूर्वरूपादिनाशकत्वमग्रिमरूपाद्युत्पादकत्वं च स्यान्मध्यशब्दवत् । अथवोपान्त्यशब्दवद्रूपाद्युत्पाद्यैव विनाशयतु को दोष इति चेत् मैवं पिठरे वा परमाण्वन्तरे वा चिरान्तरितोत्पादविनाशस्थले तत्रैव परमाणौ वा पूर्वरूपादिविनाशोत्तररूपाद्युत्पादौ भिन्नकारणकावेवोपलभ्येते तेन विवादाध्यासितस्थले तथैवोन्नीयते । नहि सहचारदर्शनव्यभिचारादर्शनाभ्यामविनाभावो न परिच्छिद्यते तथा चैतद्द्यासिबलेन प्रयोगः । परमाणौ रक्तं रूपमेतत् पूर्वरूपनाशकाग्निसंयोगभिन्नाग्निसंयोगजन्यं पार्थिवपर-

माणुरूपत्वात् चिरान्तरितमस्मत्प्रतिपन्नैतत्परमाणुरूपव-त् । यद्वा विवादाध्यासितौ रूपविनाशोत्पादौ भिन्ना-साधारणकारणकौ रूपोत्पादविनाशत्वात् पिठररूपोत्पा-दविनाशवत् । यद्वा रूपं न स्वध्वंसकासमवायिकारणकं रूपत्वात् मतवत् । यद्वा रूपध्वंसो न रूपासमवायि-कारणजन्यः रूपध्वंसत्वात् मतवत् रूपासमवायिका-रणं वा न रूपध्वंसजनकं रूपासमवायिकारणत्वात् मतवत् । न चाग्निसंयोगत्वेनैव रूपासमवायिकारण-त्वमिति बाधोऽत्रेति वाच्यं सहकारियोग्यतागर्भस्य कारणत्वस्यैव विवक्षितत्वात् । विपक्षबाधकतर्कशून्या हेतव इति चेत् न निरुपाधिसम्बन्धशालित्वात् । किञ्च कार्यविनाशविशिष्टं कालमपेक्ष्य रूपादिविनाशात् रूपा-दिध्वंसविशिष्टं कालमपेक्ष्य रूपाद्युत्पाददर्शनात् सति कार्ये कार्यावष्टम्भस्य प्रतिबन्धकत्वात् सति च रूपादौ रूपाद्यन्तरानुपपत्तेः । न चैतावन्तं कालमेकोऽग्निसंयो-गोनुवर्त्तितुमीष्टे तेजसोऽविलम्बगमनशीलत्वात् तेजो-न्तरेण नुद्यमानत्वादभिहन्यमानत्वाच्च । किञ्च यद्यु-त्पादक एवाग्निसंयोगो नाशकस्तदा रूपादौ नष्टेऽग्नि-नाशे नीरूप एव परमाणुश्चिरंस्तिष्ठेत् नाशकश्चेदुत्पा-दकस्तदा पाकेन रक्तसारता न स्यात् परमाण्वन्तरे

कर्मचिन्तनाच्च पञ्चमे षष्ठे सप्तमे ऽष्टमे नवमे वा क्षणे गुणोत्पत्तिः एकत्र परमाणौ कर्म ततो विभागः ततश्चारम्भकसंयोगनाशक्षण एवापरत्र परमाणौ कर्म ततश्चारम्भकसंयोगनाशाद् द्व्यणुकनाशः परमाण्वन्तरकर्मणा च विभाग इत्येकः क्षणः। ततः केवले परमाणौ श्यामादिध्वंसः विभागाच्च पूर्वसंयोगनाश इत्येकः क्षणः । ततो रक्ताद्युत्पत्तिः द्रव्यारम्भकः संयोग इत्येकः क्षणः । अथ द्व्यणुकोत्पत्तिरथ तत्र रूपाद्युत्पत्तिरिति पञ्चक्षणा । द्रव्यविनाशसमकालं परमाण्वन्तरे कर्मचिन्तनात् षष्ठे गुणोत्पत्तिः । तथाहि परमाणुकर्मणा परमाण्वन्तरविभागः ततो द्रव्यारम्भकसंयोगनाशोथ द्व्यणुकनाशः अस्मिन्नेव क्षणे परमाण्वन्तरे कर्म ततः श्यामादिनिवृत्तिक्षण एव परमाण्वन्तरकर्मणा विभागस्ततो रक्ताद्युत्पत्तिक्षण एव परमाण्वन्तरे कर्म चिन्तनात् पूर्वसंयोगनाशस्ततः परमाण्वन्तरसंयोगस्ततो द्व्यणुकोत्पत्तिः अथ रक्ताद्युत्पत्तिरिति षट्क्षणा । श्यामादिनाशसमकालं परमाण्वन्तरे कर्मचिन्तनात् सप्तक्षणा । तथाहि पूर्वन्यायेन द्व्यणुकनाशानन्तरं श्यामादिनिवृत्तिरतस्मिन्नेव क्षणे परमाण्वन्तरे कर्म ततो विभागः रक्ताद्यु-

त्पत्तिरित्येकः क्षणः ततः पूर्वसंयोगनाशस्तत उत्तरसंयोगः अथ द्व्यणुकमथ तत्र गुणोत्पत्तिरिति सप्तक्षणा । रक्ताद्युत्पत्तिसमकालं परमाण्वन्तरे कर्मचिन्तनादष्टक्षणा । रक्ताद्युत्पत्त्यनन्तरं परमाण्वन्तरे कर्मचिन्तनान्नवक्षणा । तथाहि द्व्यणुकविनाशानन्तरं द्व्यणुकान्तरमुत्पद्य द्वितीये तृतीये चतुर्थे वा क्षणे गुणवद्भवतीति न सम्भवति । तथाहि एकत्र परमाणौ द्व्यणुकविनाशानुगुणक्रियासमकालमपरपरमाणौ विभागचिन्तनाद् द्विक्षणा । यदा एकत्र परमाणौ द्रव्यविनाशानुगुणकर्मकालमपरपरमाणौ द्रव्यारम्भानुगुणा क्रिया तदा त्रिक्षणा । द्रव्यविरोधिविभागसमकालं परमाण्वन्तरे कर्मचिन्तनाच्चतुःक्षणा । ननु पीलुपाकविचारो निःप्रयोजनत्वादनारम्भणीय एवेति चेत् न पार्थिवावयविविशेषगुणानां(१) यावद्द्रव्यभावित्वे सिद्धे ऽयावद्द्रव्यभाविना सुखादीनां तद्वैधर्म्यदर्शनात् पार्थिवविशेषगुणत्वनिरासेन पृथिव्यन्यद्रव्यविशेषगुणत्वसिद्धौ भूतचैतन्यनिरासस्य प्रयोजनत्वात् । तथाहि सुखादयो न भूतविशेषगुणाः(२)

---

(१) पार्थिवविशेषगुणानां—पा० ३ पु० ।
(२) न मूर्तविशेषगुणाः—पा० २ पु० ।

अयावद्द्रव्यभावित्वात् शब्दवत् । अयावद्द्रव्यभावित्वं च स्वसमानाधिकरणध्वंसप्रतियोगित्वम् ॥

अथ संख्या । तत्र गणितव्यवहारासाधारणकारणत्वं संख्यात्वम् । एकमात्रवृत्तिवृत्तित्वे सति पृथक्त्वान्यानेकवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वं वा व्यासज्यवृत्तित्वे सति अव्यासज्यवृत्तिवृत्तिपृथक्त्वान्यगुणत्वव्याप्यजातिमत्त्वं वा । संख्या नास्त्येव एकादिप्रत्ययस्य घटादिस्वरूपनिबन्धनत्वादिति चेत् न घटव्यक्तेस्तत्प्रयोजकत्वे घटान्तरे तत्प्रत्ययाभावप्रसङ्गात् घटत्वस्य प्रयोजकत्वे पटादौ तत्प्रत्ययाभावप्रसङ्गात् न चायं प्रत्ययो भ्रान्तः बाधकाभावात् । तथा च निमित्तापेक्षायां संख्यैव निमित्तमिति । नन्वेकत्वं जातिरेवास्तु भवति हीदमेकमिदमेकमित्यनुगतप्रत्ययः । एकत्वगुणवृत्तिजात्या त्वनुगमसमर्थने गौरवम् । सत्तया सहान्यूनातिरिक्तव्यक्तिकत्वं जातित्वे बाधकमिति चेत् तर्हि सत्तैव गुणः स्यादेकत्वं तु जातिरिति वैपरीत्यमेव किं न स्यादिति चेत् मैवम् एकत्वान्यगुणाविषयकः शाब्द एकत्वप्रत्ययो गुणविषयकः एकप्रत्ययत्वात् चाक्षुषैकप्रत्ययवत् चाक्षुषैकप्रत्यये रूपादीनां भानाद दृष्टान्तता यद्वा । द्वित्वमेकमात्रवृत्तिवृत्तिगुणत्वव्याप्य-

जातिमत् अपेक्षाजन्यत्वात् द्विपृथक्त्ववत् किं च यद्येकत्वं जातिः स्यात् तदा द्वयमेतदितिवत् द्वयमेतदेकमित्यपि स्यात् नन्वसमुच्चयमेकत्वं समुच्चयस्तु द्वित्वादिकमिति चेत् न एकस्यैवासमुच्चयत्वात् द्व्यादिसंख्याया एव समुच्चयत्वात्। ननु द्व्यादिसंख्या समुच्चयः किं तर्हि भिन्नानामभिन्नबुद्ध्युपग्रहमात्रं तदिति चेत् न एवं सति द्वित्वत्रित्वादिविचित्रव्यवहारविलोपप्रसङ्गात्। ननु समुच्चये द्वित्वाद्युत्पत्तिप्रयोजको यो विशेषस्त्वयापेक्षाबुद्धिगतो वाच्यस्तमेव विशेषमादाय द्वित्वादिव्यवहारवैचित्र्यं स्यादिति चेत् न एकत्वद्वयगोचरयापेक्षाबुद्ध्या द्वित्वोत्पादात्। एवं द्वित्वादावपि एकत्वे गुणेकत्वं द्वित्वमिति चेत् न चतुर्विंशतिर्गुणाः पञ्च कर्माणीतिवदारोपात् तदुपपत्तेः। समुच्चयोऽपि तर्हि विशेषः स्यादिति चेत् न द्वित्वादीनां क्वचित्तात्त्विकत्वमन्तरेण समारोपानुपपत्तेः। ननु नित्यमेव द्वित्वादिकमपेक्षाबुद्ध्या व्यज्यत इति चेत् न अपेक्षाबुद्धित्वेनैव व्यञ्जकत्वे द्वित्वव्यञ्जकापेक्षाबुद्ध्या त्रित्वादीनामप्यभिव्यक्तिप्रसङ्गात्। अपेक्षाबुद्धिविशेषो द्वित्वव्यञ्जक एवेति चेत् समानदेशानां समानेन्द्रियग्राह्याणां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वानुपपत्तेः।

अवयविसंयोगयोर्व्यभिचार इति चेत् न एकावच्छेदेन समानदेशत्वस्य विवक्षितत्वात् अवयविनोऽव्याप्यवृत्तित्वेनाव्याप्यवृत्त्यवयवसंयोगस्यैकावच्छेदेनावृत्तेः। अर्द्धनिखातवंशसंख्यापरिमाणयोर्व्यभिचार इति चेत् न तत्रेन्द्रियसन्निकर्षेण द्वयोरपि ग्रहणात् हस्ताद्यवच्छेदमात्रं तत्र न गृह्यत इत्यन्यदेतत् । अत एव लीलावतीकेरत्र रूपपरिमाणयोर्न व्यभिचारः परस्परव्यभिचारिव्यञ्जकाव्यङ्ग्यत्वं वा विवक्षितम् तस्मादपेक्षाबुद्धिर्द्वित्वादीनामुत्पादिकैव न तु व्यञ्जिका किं च द्वित्वाद्यपेक्षाबुद्धिजन्यं कार्यत्वे सति नियमेनैकप्रतिपत्तृवेद्यत्वात् सुखवत् अथ प्रागभावादौ व्यभिचारवारणाय कार्यत्वे सतीति विशेषणम् न चैतदसिद्धं द्वित्वादीनामनेकवृत्तीनां नित्यत्वे जातित्वापत्तेः। न चेष्टापत्तिः जातिग्रहे व्यक्तिस्वरूपयोग्यतामात्रस्य तन्त्रत्वे ऽपेक्षाबुद्ध्यनपेक्षाप्रसङ्गात् । ननु कारणगुणेभ्य एव द्वित्वादिकमुत्पन्नमपेक्षाबुद्ध्या व्यज्यतामित्यनुमानमप्रयोजकमिति चेत् न तथा सति द्वित्वादीनामेकद्रव्यत्वप्रसङ्गात् एकत्ववत् द्वाभ्यामवयवाभ्यामारब्धे त्रित्वादिकं च न स्यात् कारणाभावात् द्रव्यान्तरैकत्वमादाय परार्द्धपर्यन्तमुत्पद्यतामिति चेत्

न द्रव्यान्तराणां तत्र अस्यैव नियमस्यानभ्युपगमात् कारणत्वात् अकारणगुणेनापि जन्यताम् कारणाकारणसंयोगजसंयोगवदिति चेत् एवं सत्यङ्कुरीतरु(?)संयोगादुत्पन्नस्य संयोगस्य यथाङ्कुरी(?) नाश्रयस्तथा त्रित्वादिकमपि कारणाश्रयं न स्यात् तथा च कारणपरमाणुद्वयमादाय द्व्यणुके त्रित्वव्यवहारानुपपत्तिः किञ्च द्वित्वादीनां कारणगुणपूर्वकत्वे नित्यद्रव्येषु द्वित्वादिकं नोत्पद्येत तस्मादपेक्षाबुद्धिर्निमित्तकारणं समानाधिकरणमेकत्वमसमवायिकारणं द्वित्वादिपरार्धपर्यन्तसंख्यानामिति स्थितम् । तत्रैतच्चिन्त्यते। समवाय्यसमवायिनिमित्तानां साम्ये द्वित्वादिकार्यवैचित्र्यं कथं स्यादिति । द्वाभ्यामेकत्वाभ्यां समानाधिकरणं द्वित्वं त्रिभिरेकत्वैस्त्रित्वमिति चेत् न एकत्वे द्वित्वाद्यभावात् । द्वाभ्यां द्रव्याभ्यां द्वित्वमिति चेत् न द्वित्वोत्पत्तेः पूर्वं द्रव्ये द्वित्वाभावात् । भावे वा द्वित्वान्तरवैयर्थ्यात् । एकत्वेष्वेव द्वित्वाद्युत्पत्तिं प्रति किञ्चिद्वैलक्षण्यमिति चेत् न तत एव द्वित्वादिव्यवहारोत्पत्तौ द्वित्वाद्यभ्युपगमविरोधात्। अपेक्षाबुद्धावेव तथा विशेषोऽस्तीति चेत् न विषयवैलक्षण्यं विना तदनुपपत्तेः अननुभवाच्च। अदृष्टविशेषादेव विशेष इति चेत् एवं तर्हि-

स्याव्यवस्थिततथा द्वयोरेव कदाचित् त्रित्वं त्रिषु कदाचित् द्वित्वं व्यवह्रियेत । दृष्टनियामकमन्तरेणादृष्टे तथाभ्युपगमे सर्वत्र कार्यवैचित्र्ये तदङ्गीकारे कारणान्तरवैचित्र्यानुपपत्तेः । आरोपितं द्वित्वादिकमेकत्वे ऽविशेषः स्यादिति चेत् न द्वित्वादिकं विना तादृशाभिमानासिद्धेः । तादृशाभिमानमन्तरेणापेक्षाबुद्धेरविशेषात् । अभिमानान्तरेण तथापेक्षाबुद्धेरुत्पत्तौ चानवस्थानादिति चेत् । नैवम् । प्रागभावभेदात् कार्यभेदोपपत्तेः । प्रागभावोऽपि साधारण एवेति चेत् घटसामग्र्यां सत्यामप्युत्पन्न एव घटः पुनर्नोत्पद्यते ऽनुत्पन्नश्चोत्पद्यत इत्यन्वयव्यतिरेकाभ्यां स्वस्वप्रागभावस्यैव कारणत्वोपगमात् । यदि च नैवं तदा पाकजस्थले रूपरसादीनामपि वैलक्षण्यं न स्यात् । नहि तत्र स्वप्रागभावमन्तरेण कार्यभेदप्रयोजकमन्यत् पश्यामः । समवाय्यसमवायिनिमित्ताना साधारण्यात् प्रागभावस्यान्यथानुपपत्त्या स्वध्वंसस्यापि तत्तत्कारणत्वात् तत्कृतमेव वैलण्यं स्यादिति चेत् न ध्वंसानामप्यन्वयव्यतिरेकयोः सर्वाणि प्रति साम्यात् । यत्र गन्धमात्रवैलक्षण्यं घटादौ दृश्यते रसादीनां साम्यं तत्र गन्धमात्रस्यैव पाकजत्वाभ्युपगमे ऽन्येषां प्रागभावाना व्यभिचारात् स्वस्वप्रागभावमात्रस्यैव तत्र कारणत्वा-

वधारणात् प्रकृते व्यभिचाराभावात् । द्वित्वादिप्रागभावाना सर्वसाधारण्यमिति चेत् न एवं सति चतुष्ट्वाद्युत्पत्तौ द्वित्वादिप्रागभावानामावश्यकत्वेन द्वयमिदं त्रयं चतुष्टयं चेति स्यात् । अत एव व्यङ्ग्यत्वं ब्रूम इति चेत् न तत्र दोषस्योक्तत्वात् । प्रागभावानां चासाधारणकारणत्वस्य समर्थितत्वात् । यद्वा शुद्धया अपेक्षाबुद्ध्या द्वित्वं द्वित्वसहितया त्रित्वमित्याद्यूह्येयम् । शुद्धत्वं चैकत्वान्न संख्याविषयत्वम् । ननु द्वे द्रव्ये त्रीणीमानीति संख्याविशिष्टप्रत्यक्ष एव विशेषणस्य द्वित्वादेर्विनाशात् विशेषणसम्बन्धाधीनत्वाद्विशिष्टज्ञानस्य प्रत्यक्षस्य वर्तमानविशेषणविषयत्वादिति विशिष्टज्ञानमनुपपन्नमिति चेत् न विशेषणस्य विशिष्टज्ञानजनकत्वात् जनकत्वं च पूर्वमत एव द्वित्वादेरिति वा ॥

अथ परिमाणम् । कालवृत्तिवृत्तित्वे सति एकवृत्तिमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं परिमाणत्वं परिमितव्यवहारासाधारणकारणगुणत्वं वा । तच्चतुर्विधम् । अणुत्वं महत्त्वं ह्रस्वत्वं दीर्घत्वं च । तत्राणुत्वं परमाणुवृत्ति तच्च पारिमाण्डिल्यं(१) तत्समानाधिकरणं परमह्रस्वत्वम् । अवान्तराणुत्वं द्व्यणुकमात्र-

(१) पारिमाण्डल्य—पा० २ पु० ।

वृत्ति तत्समानाधिकरणमेवावान्तरह्रस्वत्वं द्व्यणुकमारभ्य महीमहीधरसागरादिपर्यन्तमवान्तरमहत्त्वं तत्समानाधिकरणमेवावान्तरदीर्घत्वम । आकाशकालदिगात्मसु परममहत्त्वं तत्समानाधिकरणं च परमदीर्घत्वं एवं सर्वमेव द्रव्यं परिमाणद्वययोगि । ह्रस्वत्वदीर्घत्वे न परिमाणे इति केचित् । तन्न महत्सु दीर्घमानीयतामिति निर्धारणबलात् तत्सिद्धिः । न च महत्त्वविशेषविषयकत्वेनावयवसंस्थानविशेषविषयकत्वेन वा निर्द्धारणोपपत्तिरिति वाच्यम् । इदमस्मान्न महत् किं तु दीर्घमिदमस्मान्न दीर्घं किं तु महदिति प्रतीतिवैलक्षण्यात् तत्सिद्धिः । एवं महत्तरेषु दीर्घतरमानीयतामिति प्रतीतेरपि तद्भेदसिद्धिः । न च महत्सु वर्त्तुलं चतुरस्रं त्रिकोण चानीयतामिति निर्द्धारणबलाद्वर्त्तुलादिकमपि परिमाणं स्यादिति वाच्यम् तेषां महत्त्वविशेषत्वात् अन्यथा गौरवात् । सङ्कोचविकाशवदवयवसंस्थानविशेषत्वाद्वा दीर्घत्वह्रस्वत्वे न नित्ये इत्येके । तन्न परममहत्त्ववदितरापेक्षया आकाशादीनां परमदीर्घत्वस्य परमाणुषु परमह्रस्वत्वस्य चौत्पत्तिकप्रतीतेः । यदि परमह्रस्वत्वं परमाणुष्ववान्तरह्रस्वत्वं च द्व्यणुकेष्वेव तदा एवं सापेक्षया समिदादिषु कथं ह्रस्वत्वव्यवहारः कुवलयापेक्षया कथमा-

मलकादावणुत्वव्यवहार इति चेत् न तद्व्यवहारस्य भाक्तत्वात् । भक्तिश्च प्रकर्षाभाव एव उभाभ्यां भजनात् । यत्र वास्तवं ह्रस्वत्वं यत्र चावास्तवमुभयत्रापि प्रकर्षाभावस्य सत्त्वात् । नन्ववान्तरमहत्त्वदीर्घत्वयोः प्रत्यक्षमेव प्रमाणं परमदीर्घत्वह्रस्वत्वयोः किं प्रमाणमिति चेत् योगिप्रत्यक्षमेव । तद्विधिश्चान्याप्युच्यते(१) अणुपरिमाणं स्वसमानाधिकरणपरिमाणभिन्नं परिमाणत्वात् महत्त्ववत् एवं परममहत्त्वं स्वसमानाधिकरण॰ परिमाणभिन्नं परिमाणत्वात् महत्त्ववत् । यद्वा परिमाणत्वं स्वसमानजातीयसमानाधिकरणत्वव्याप्यं कालवृत्तिवृत्तित्वात् दिग्वृत्तिवृत्तित्वाद्वा संयोगत्ववत् विभागत्ववत् । तत्रानित्यमहत्त्वं संख्यापरिमाणप्रचययोनि त्रसरेणुमहत्त्वं सख्यामात्रयोनि ईश्वरापेक्षाबुद्ध्या द्व्यणुकेषु त्रिषु वर्त्तमानया बहुत्वसंख्यया तदुत्पत्तेः अवयवमहत्त्वप्रचययोस्तत्राभावात् । समानमहत्त्वसमानबहुत्वावयवारब्धद्रव्यापेक्षया तूलकादिपरिमाणोत्कर्षदर्शनात् प्रचयस्य कारणत्वमवयवप्रचयमहत्त्वसाम्ये भूयोवयवारब्धे महत्त्वोत्कर्षदर्शनात् बहुत्वस्य समानप्रचयबहुत्वावयवारब्धापेक्षया महावयवारब्धे महत्त्वो-

(१) तद्विरवाडायान्यदप्युच्यते—पा० ३ पु० ।

त्कर्षदर्शनान्महत्त्वस्य साकल्ये तु सर्वेषाम् । यद्वान्वय-व्यतिरेकित्वात् द्व्यणुकपरिमाणं परमाणुद्वयनिष्ठयेश्वरापेक्षाबुद्धिजनितया द्वित्वसंख्यया जन्यते ह्रस्वत्वमपि तथैव कार्यभेदस्तु प्रागभावभेदात् महत्त्वकारणमिव दीर्घत्वकारणभेदस्तु प्रागभावभेदादेव । विनाशस्त्वनित्यपरिमाणानां सर्वेषां स्वाश्रयविनाशादेव । परिमाणत्वजातिसिद्धौ प्रमाणमनुगतप्रत्यक्षमेव । यद्वा महत्परिमाणं महापरिमाणासमानाधिकरणगुणवृत्तिगुणत्वव्याप्यजातिमत् मूर्तगुणत्वाद् रूपवत् मूर्तपदं ज्ञानादौ व्यभिचारवारणाय तेषां महापरिमाणासामानाधिकरण्याभावात् ॥

अथ पृथक्त्वम् । प्रक्रियान्तरमस्य संख्यावत् । अवधिव्यङ्ग्यत्वे सत्येकमात्रवृत्तिवृत्त्यनेकवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वं पृथक्त्वम् । प्रमाणं चात्रेदमस्मात् पृथगित्यबाधितं प्रत्यक्षमेव । तत्र विप्रतिपत्तौ संख्यात्वमेकानेकवृत्तिवृत्तिगुणत्वसाक्षाद्व्याप्यजातिसमानाधिकरणात्यन्ताभावप्रतियोगि गुणत्वव्याप्यजातित्वात् रूपत्ववत् । रूपत्वादीनां संख्यावृत्त्यत्यन्ताभावप्रतियोगित्वेनैव वा साध्यसत्त्वात् । ननु पृथक्त्वबुद्धिरितरेतराभावेनैवान्यथासिद्धेर्न तद्गुणान्तरमिति चेत् न पृथक्त्वस्यावधिनिरूप्यत्वादन्योन्याभावस्य च प्रतियोगिनिरूप्य-

त्वात् इदमस्मात् पृथगिदमिदं न भवतीति प्रतीतिभे-
ददर्शनात् । प्रातिपदिकार्थमात्र एव पञ्चम्यनुशास-
नबलादिति चेत् तर्हि अन्यारादितरर्ते इत्यत्रान्यशब्द-
स्यार्थपरतया तदर्थकनञ्प्रयोगेऽपि पञ्चम्यापत्तेः । तथा
च घटान्न पट इति स्यात् । एवं तर्हि अन्यदर्थान्तर-
मितरद् भिन्नमित्यादिशब्दा अपि पृथक्त्वपर्याया एव स्यु-
रिति चेत् कः सन्देहः । नञर्थविशिष्टः पृथक्त्वशब्दार्थो
न तु नञर्थमात्रमिति चेत् न अपटो घट इत्यत्रापि पञ्च-
म्यापत्तेः । वैशिष्ट्यमेव पृथक्त्वम् भवति हि तस्मात् पृथ-
गिति तस्माद्विशिष्ट इत्यर्थ इति चेत् न दण्डविशिष्टोऽयं
देवदत्तो न तु दण्डाविशिष्टात् पृथगिति प्रतीतेः । न च
वैधर्म्यमेव पृथक्त्वं श्यामाद्रक्तो विधर्मा न तु पृथगिति
प्रतीतेः न च सामान्यविशेष एव पृथक्त्वं पदार्थत्रय-
वृत्तित्वे सत्तया द्रव्यमात्रवृत्तित्वे द्रव्यत्वेन सहान्यू-
नानतिरिक्तवृत्तित्वात् । यदि पृथक्त्वं गुणः कथं गुण-
कर्मादौ तत्प्रतीतिरिति चेत् न तत्र तद्व्यवहारस्य
गौणत्वात् । अन्योन्याभाववत्तैव च गुणयोगः प्र-
तीतिश्च कथं गौणीति चेत् न प्रतीतेरारोपरूपत्वा-
त् महान् शब्द इतिवत् अन्योन्यावधिकं प्रति-
द्रव्यमेव पृथक्त्वं प्रतीयत इति प्रतिद्रव्यविश्रान्त-

मेव । अनेकद्रव्यमपि द्विपृथक्त्वादिकमित्यत्र न प्रमाणं द्वौ पृथगिति प्रतीतेर्द्वित्वसमानाधिकरणाभ्यां पृथक्त्वमेवान्यथासिद्धत्वात् । द्वौ पीताविति- वदिति चेत् न प्रत्येकविश्रान्तपृथक्त्वयोरन्योन्यावधिकत्वात् । भवति हि चैत्रान्मैत्रः पृथगिति चैत्रमैत्रौ द्वौ पृथगित्यत्र तु चैत्रमैत्रयोः प्रत्येकं नावधित्वं नहि भवति चैत्रमैत्रौ चैत्रान्मैत्राद्वा पृथगिति द्विपरत्वबन्दीग्रहस्तु तत्रैव मोचनीयः । द्विपृथक्त्वादौ पृथक्त्वजातेरन्यावान्तरजातिर्न वर्तते प्रतीतिवैलक्षण्यं द्वित्वादिघटितमेवेति । यद्यपि भाष्यस्वरसस्तथापि द्विपृथक्त्वादावावान्तरजातिर्वर्तत एव द्वित्वत्वादिजातिः परं तत्र न वर्त्तते तद्विशिष्टबुद्धिस्तु द्वित्वादिगुणाधीनैवेत्याचार्याः । तत्रापि द्विपृथक्त्वोत्पत्तिकाले यदि द्वित्वमुत्पद्यत एव तदा तत्र समानाधिकरणं द्वित्वं विशेषणमन्यथोपलक्षणं द्विपृथक्त्वादिप्रक्रिया द्वित्वादिप्रक्रियावद् द्रष्टव्या । एकत्ववदेकपृथक्त्वस्यापि कारणगुणपूर्वकत्वमाश्रयनाशनाश्यत्वं द्वित्वादिवत् द्विपृथक्त्वाद्यपेक्षाबुद्धिजन्यत्वं तन्नाशनाश्यत्वं च । समानदेशानां समानेन्द्रियग्राह्याणां च द्वित्वद्विपृथक्त्वादीनां परस्परव्यभिचारिव्यञ्जकव्यङ्ग्यत्वं

नास्तीत्यदोषः ॥

अथ संयोगः । विभागप्रतियोगिकान्योन्याभाववत्त्वे सत्यनेकवृत्तिमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं संयोगत्वम् । द्रव्यासमवायिकारणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं वा । पार्थिवपरमाणुरूपासमवायिकारणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं वा । रसादिप्रक्षेपेणापि द्रष्टव्यम् । प्रमाणं त्वत्र प्रत्यक्षमेव । भवति हि संयुक्ताविमाविति धीः प्रात्यक्षिकी । स चायं त्रिविधः अन्यतरकर्मज उभयकर्मजः संयोगजश्चेति । तत्र अन्यतरकर्मजो यथा स्थाणुश्येनयोः । उभयकर्मजो यथा मल्लयोर्मेषयोर्वा । संयोगजश्च यथा तन्तुतुरीसंयोगात् पटतुरीसंयोगः यथा वाङ्गुलीतरुसंयोगाद्धस्ततरुसंयोगः कारणाकारणसंयोगात् कार्याकार्यसंयोगः सर्वत्र द्रष्टव्यः । कारणसंयोगिना हि कार्यमवश्यं संयुज्यते । भवति ह्यङ्गुलीमात्रकर्मणा तरुसंयोगे जाते निश्चलस्यापि पाणेस्तरुसंयोगप्रतीतिर्भुजतरुसंयोगप्रतीतिः शरीरतरुसंयोगप्रतीतिश्च । कचिद्द्वाभ्यां तन्त्वाकाशसंयोगाभ्यां द्वितन्तुकाकाशसंयोगः बहुभ्यश्च तन्तुतुरीसंयोगेभ्य एकः पटतुरीसंयोगः । कचिदेकस्मादेव कारणाकारणसंयोगाद्

द्वयोः कार्याकार्यसंयोगयोरुत्पत्तिः यथा पार्थिवाप्य-परमाण्वोः संयोगे सति तयोरेव सजातीयावरपर-माणुद्वयसंयोगे सति द्व्यणुकद्वयारम्भे वा रूपाद्युत्पत्ति-समकालमितरेतरकारणाकारणगतात् संयोगादितरे-तरकार्याकार्यगतौ भवतः तत्र मानं पार्थिवद्व्यणु-कमाप्येनाणुनाऽऽप्यं च द्व्यणुकं पार्थिवेनाणुना संयुज्यते तदकार्यत्वे सति तत्संयोगिकार्यत्वात् यद्यदकार्यत्वे सति यत्संयोगिकार्यं तत्तेन संयुज्यते तथा तुरीसंयु-क्ततन्तुकार्यः पटस्तुर्येति । अत्र च पार्थिवः परमाणुरा-प्यद्व्यणुकसंयोगी आप्यद्व्यणुकाजनकत्वे सत्या-प्यद्व्यणुकसमानाधिकरणसमानकालीनसंयोगाश्रयत्वा-त् यदेवं तदेवमित्यनुमानमसङ्गतं प्रकारान्तरेण त-त्संयोगसिद्धौ विवक्षितासिद्धेः । सोऽयमनेकवृ-त्तिरव्याप्यवृत्तिश्च तत्र यावदन्योन्याभावसमानाधिक-रणत्वमनेकवृत्तित्वम् आश्रयान्योन्याभावसमानाधिक-रणत्वं वा स्वसमानाधिकरणैकत्वात्यन्ताभावसमा-नाधिकरणत्वम् स्वसमानाधिकरणपरिमाणात्यन्ता-भावसमानाधिकरणत्वं वा गुणानेकवृत्तित्वम् अ-व्याप्यवृत्तित्वं च स्वात्यन्ताभावसमानाधिकरणत्वम् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं वा स्वा-

त्यन्ताभावाविरोधित्वं वा स्वाविरोध्यत्यन्ताभावप्रतियोगित्वं वा । कथमेवमिति चेत् अनुभवबलात् भवति हि मूले वृक्षः कपिसंयोगवान्न(१) शाखायामिति धीः । मूलशाखे एव संयोगतदभावाश्रयाविति चेत् न वृक्षगत्वेन द्वयोरनुभवात् । विरोधिनोरेकाश्रयत्वाभावादनुभवो भ्रम एवायं किं न स्यादिति चेत् अबाधितानुभवबलेनानयोर्विरोधस्यैवाभावात् नहि विरोधाविरोधावनुभवमभिभूयावकाशमासादयतः । अन्येषां पदार्थानां नेयं रीतिरिति चेत् माभूत् सर्वेषां स्वभावस्य साधारण्ये जगद्वैचित्र्यभङ्गप्रसङ्गात् । यद्वा संयोगो व्याप्यवृत्तिरेव किञ्चिदवयवावच्छेदेन तु तदाधारता निरूप्यते इत्येवाव्याप्यवृत्तित्वार्थः । यद्वा अवयवसंयोगे उपलभ्यमान एवावयविसंयोग उपलभ्यते यत्रावयवे संयोगाभावस्तस्मिन्नुपलभ्यमानेऽपि नोपलभ्यत इत्यव्याप्यवृत्तित्वार्थः । सोऽयं द्रव्यगुणकर्मणामसमवायिकारणं तत्र द्रव्यारम्भे निरपेक्षः नहि तन्तूनां परस्परसंयोगे पटारम्भे कस्यचिदपेक्षा । रूपादीनामारम्भेऽग्निसंयोग औष्ण्यमपेक्षते । कर्मारम्भे नोदनाभिघातौ स्पर्शवेगावपेक्षेते इति गुणकर्मारम्भे सापेक्षः । विभुनोरजोऽपि संयोग इति चेत् न

(१) किं तु शाखायां—पा० २ पु० ।

संयोगव्यापिकाया युतसिद्धेस्तत्राभावात् नहि पृथगाश्रयाश्रितत्वं पृथग्गतिमत्त्वं वा युतसिद्धिर्विभुनोः सम्भवति । यद्यपि प्रत्येकमनयोर्न व्यापकता संयोगित्वेऽपि विभुपरमाण्वोः पृथगाश्रयाश्रयित्वाभावात् संयोगित्वेऽपि शरीरत्वगिन्द्रिययोः पृथग्गतिमत्त्वाभावात् पृथग्गतिमत्त्वं हि परस्परविभागहेतुक्रियावत्त्वं तच्च तयोर्नास्ति तथाप्येतद्द्वयान्यतरत्वं संयोगव्यापकं द्रष्टव्यम् । अवयवावयविनोः पृथग्गतिमत्त्वेऽपि युतसिद्ध्यतिरेकः परस्पराविभागहेतुः क्रियाविरहादेव । श्येनावयवकर्मजन्यविभागसमकालं श्येनकर्मचिन्तायां कर्मसंयोगौ सम्भूयापि संयोगं जनयत इति कन्दलीकृतः । तथाहि श्येनावयवकर्मजन्यविभागश्येनकर्मणी पूर्वसंयोगनाशविभागौ श्येनावयवस्थाणुसंयोगश्येनकर्मजनितविभागजन्यसंयोगनाशौ तदुत्तरं श्येनावयवस्थाणुसंयोगश्येनकर्मभ्यां श्येनस्थाणुसंयोगः । प्रत्येकमवधृतसामर्थ्याभावात् नैवमिति किरणावलीकृतः । तथाहि संयोगजश्च संयोगो विभागाविरोधी संयोगेनान्तरा विभागाजननात् । कर्मजस्तु संयोगो विभागविरोधी कर्मणान्तरा विभागजननात् न चैकस्यैव विभागविरोधित्वं तदविरोधित्वं सम्भवतीति किञ्च श्येनकर्मसम-

कालमवश्यं तदवयवकर्मणा भवितव्यम् अवयविकर्मणां यावदवयवकर्मव्याप्तत्वात् । तथा च कर्मवति कर्मानुत्पत्ते-रवश्यं श्येनावयवकर्मनाशानन्तरमेव श्येनकर्मणा भवि-तव्यमिति कुतो यौगपद्यम् । यौगपद्ये च तदुभयजनि-तसंयोगाविरुद्धजातिद्वयसमावेशः स्यात् । न च तदुभय-विजातीय एवायं संयोगस्तादृशजातेर्योग्यानुपलब्धिप्रति-हतत्वात् संयोगस्य त्रिविधस्यापि समानाधिकरणा-द्विभागाद्विनाशः । यदा निष्क्रियमेव द्रव्यं विनश्यति तदाश्रयनाशादपि संयोगनाशः क्वचिदाश्रयनाशवि-भागाभ्यामपि । तद्यथा अंशुकर्मजनितविभागाद् यदा तन्त्वारम्भकसंयोगनाशस्तदैव तन्त्वन्तरे कर्म तन्त्वार-म्भकसंयोगनाश इति कन्दलीकृतः । तदसत् द्रव्य-विनाशकाले विभागानुत्पत्तेः समवायिकारणस्य कार्य-समानकालीनत्वनियमादिति किरणावलीकृतः ॥

अथ विभागः । स्वजनककर्मोत्पत्त्यधिकरणक्षणा-व्यवहितोत्पत्तिकवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं वि-भागत्वम् । द्रव्यासमवायिकारणावृत्तित्वे सत्येकमात्र-वृत्त्यवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं वा विभक्तप्रत्यय-विशेषणत्वं वा । संयोगाभाव एव विभाग इति चेत् अत्यन्ताभावत्वे रूपादिष्वपि प्रसङ्गात् । द्रव्यवृत्तित्वेन

विशेषितोयमिति चेत् न अन्वयव्यतिरेकयोरपि प्रसङ्गात् । संयोगध्वंसोसाविति चेत् न एकसंयोगिनाशेऽपि-विभागप्रत्ययप्रसङ्गात् । संयोगिद्वयवृत्तिः संयोगध्वंसो विभाग इति चेत् न द्वित्वस्यातन्त्रत्वात् । न हि घटत्वनिबन्धनो(१) घटव्यवहारस्तदेकत्वानेकत्वनिबन्धनः(२) । ननु विभागस्य क्षणद्वयमात्रावस्थायितया तदुत्तरकालमपि विभक्तप्रत्ययानुवृत्त्या संयोगत्वावच्छिन्नप्रतियोगिकः संयोगध्वंसो वा संयोगासमानकालीनः संयोगध्वंसो वा संयोगिद्वयनिष्ठो विभागः स्यादिति चेत् न उक्तोत्तरत्वात् । प्रमेयाधिक्याधीनो हि विलक्षणप्रत्ययो न विशेषणैकत्वमात्राधीन इति । किञ्च संयोगस्य समानाधिकरणविरोधिगुणनाश्यत्वात् स एव गुणो विभागः । कर्मैव संयोगनाशकमस्त्विति चेत् न कारणनाशविरोधिगुणयोरेव गुणनाशकत्वकल्पनात् किञ्च यत्राङ्कुरीकर्मणाङ्कुरीतरुसंयोगस्तस्माद्धस्ततरुसंयोगस्ततो भुजतरुसंयोगस्ततः शरीरतरुसंयोगस्तत्राङ्कुर्यामुत्पन्नेन कर्मान्तरेणाङ्कुरीतरुविभागादङ्कुरीतरुसंयोगनाशसम्भवेऽपि हस्ततरुसंयोगादीनां नाशकः समानाधिकरणो गुण एव वाच्यः अङ्कुरीकर्मणो व्य-

(१) परतन्त्रो—पा० २ पु० । (२) परतन्त्रो—पा० ३ पु० ।

धिकरणस्यापि संयोगनाशकत्वप्रसङ्गात् । विभागः सन्निसबाधितप्रत्ययात् घटात् पटोऽयं विभक्त इति सावधिकत्वात् शब्दसंयोगाजन्यशब्दासमवायिकारणत्वात् विभागाभावस्यैव संयोगापत्तौ विनिगमकाभावात् न संयोगध्वंसो विभागः । हिमविन्ध्यौ विभक्ताविति धीस्तु संयोगाभावे विभागारोपरूपा विभागपदस्य नानार्थत्वाद्वा । किञ्च संयोगत्वं द्विष्ठमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिभिन्नं जातित्वात् मेयत्वात् घटत्ववदित्यनुमानादपि विभागसिद्धिः । सोऽयं विभागस्त्रिविधोऽन्यतरकर्मज उभयकर्मजो विभागजश्च । उभयकर्मजे यद्यपि दण्डद्वयजन्ये घटे एकदण्डजन्यो न विशेषस्तथा न विशेषो युक्तः तथाप्यन्यतरकर्मजे विभागे पटाद् घटो विभक्त इति धीरुभयजे तु मल्लौ मेषौ वान्योन्यं विभक्ताविति धीरिति प्रत्ययकृत एव विशेषो द्रष्टव्यः । विभागजस्तु द्विविधः कारणमात्रविभागपूर्वकः कारणाकारणविभागपूर्वकश्च । तत्राद्यो वंशे पाट्यमाने दलद्वयविभागाद्दलाकाशविभागः दलकर्मत एव किं न स्यादिति चेत् न कर्मणो द्रव्यारम्भकसंयोगविरोधिविभागजनकतया तदविरोधिविभागजननासामर्थ्यात् न ह्येकं कर्मोभयं विरुद्धं का-

र्यं कर्तुमीष्टे कार्यविरोधेन कारणविरोधस्यापि कल्पयितु मर्हत्वात् कारणविरोधस्तु कर्मवैलक्षण्यकल्पननिवर्तनीय एव कर्मवैचित्र्यं तु किञ्चिदारम्भकसंयोगप्रतिद्वन्द्विविभागजनकस्य तत्प्रतिद्वन्द्विविभागमात्रजनकम् किञ्चिच्च तदविरोधिविभागमात्रजनकमिति । दृष्टं हि विकसत्कमलकुड्मलादौ द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागजनकस्य तत्प्रतिद्वन्द्विविभागाजनकत्वम् । अन्यथा कमलकुड्मलमपि नश्येदिति । तथा च वंशदलकर्म यदि द्रव्यारम्भकसंयोगाविरोधिवंशदलाकाशविभागमपि जनयेत् दलद्वयविभागं न जनयेत् तस्य द्रव्यारम्भकसंयोगविरोधित्वात् । ननु कर्मवैजात्यमन्यथापि सम्भवति किञ्चित् कर्म विरोधिनमविरोधिनं च विभागं जनयेत् किञ्चिद्वा विरोधिनमेवेति चेत् न एतावतापि विरुद्धकार्यजनकत्वविरोधस्यानिवृत्तेः । वैजात्यकल्पना वस्तुस्वाभाव्यमेवाविरोधं निवर्त्तयिष्यतीति चेत् न कार्यविरोधस्य प्रत्यक्षसिद्धतया तदधीनकारणवैजात्यस्यैव कल्पयितुमुचितत्वात् । उभयजनकस्य च सन्दिह्यमानत्वान्न तदनुरोधिवैजात्यकल्पनम् । ननु वंशदलकर्म विरोधिविभागजनकं विरोधिविभागजनकत्वादित्यत्रान्वयेन दृष्टान्ताभावो द्रव्ये व्यभिचारात् । न च

यदविरोधिविभागजनकं न तद्विरोधिविभागजनकं यथा कमलदलकर्मेतिव्यतिरेकीति वाच्यम् । द्रव्ये व्यभिचारादिति चेत् मैवं दलाकाशविभागो न द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मजन्यः द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागत्वात् कमलदलविभागवदिति भावार्थत्वात् । ननु संयोगे ऽप्ययं न्यायः कथं न स्यात् द्रव्यारम्भकसंयोगजनकस्य कर्मणो द्रव्यानारम्भकसंयोगजनने विरोधात् तथा च कारणद्वयसंयोगपूर्वकाः कारणाकारणसंयोगाः स्वीक्रियन्तामिति चेत् न संयोगस्वरूपतो विरोधाभावात् अनारम्भकद्रव्यसमवायाधीनं हि संयोगस्य द्रव्यानारम्भकत्वं न स्वरूपतः । नन्वारम्भकेऽपि तन्त्वादौ रण्डाकरण्डावस्थिते वर्तमानानां संयोगानामनारम्भकत्वदर्शनात् । नूनं संयोगे वैजात्यं तदधीनं च कर्मण्यपि वैजात्यमिति कथमारम्भकसंयोगजनके नानारम्भकोऽपि संयोगो जननीय इत्यवश्यं कारणमात्रसंयोगात् कारणाकारणसंयोग उत्पादनीय इति चेत् न सहकारिभेदसमवधानादेव तदुपपत्तौ वैजात्यकल्पने मानाभावात् । सोऽयं विभागः कारणद्वयवर्त्ती कार्यनाशविशिष्टं स्वतन्त्रं वावयवमपेक्ष्याकाशादिविभागं जनयति निरपेक्षस्य जनकत्वे कर्म-

त्वापत्तेः । संयोगविभागयोरनपेक्षं कारणं कर्मेति तल्लक्षणात् । कार्यविनाशो द्रव्यारम्भकसंयोगनाशः स्वातन्त्र्यं चावयवानां द्रव्यनाशवैशिष्ट्यमिति भाष्यकारीयविकल्पार्थ इति कन्दलीकृतः । कार्यनाशो द्रव्यनाश एव स्वातन्त्र्यं चावयवानां द्रव्यनाशवैशिष्ट्यमेव विवक्षामात्रादयं विकल्प इति किरणावलीकृतः । एवं कारणाकारणविभागपूर्वकोऽपि विभागो द्रष्टव्यः । अङ्गुली(१)तरुविभागाद्धस्ततरुविभागस्तेन शरीरतरु(२)विभाग इति कथमन्यथा संयोगपरम्पराविनाशः । विनाशस्तु सर्वेषां विभागानां समानाधिकरणात् संयोगादेव अन्यथा संयुक्तप्रत्ययवत् विभक्तप्रत्ययानुवृत्तिप्रसङ्गः ॥

अथ परत्वापरत्वे । कालपिण्डसंयोगासमवायिकारणत्वे सत्यपरत्वभिन्नैकवृत्तिमात्रवृत्तिगुणत्वं कालिकपरत्वम् । स्पन्दविषयकापेक्षाबुद्धिजन्यत्वे सत्यपरत्वानाश्रयत्वं वा यद्विशिष्टे द्रव्ये परमिति प्रत्ययस्तत्परत्वम् यद्विशिष्टेऽपरमिति प्रत्ययस्तदपरत्वमित्याचार्याः । ननु दैशिकयोस्तयोर्न प्रमाणं परापरबुद्ध्योः संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वाभ्यामेवान्यथासिद्धेरिति चेत् न तथा सति प्रमातर्यपि तद्व्यवहारप्रसङ्गात् । भवति

(१) अङ्गुरी—पा० ३ पु० । (२) भुजतरु—पा० ३ पु० ।

हि वाराणसी मत्तः परेतिधीः न तु वाराणसीतो-ऽहं पर इति संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वाविशेषेऽपि प्रमातरि परत्वापरत्वयोरनुत्पादः कारणशक्तिनियमात् । यथा भेर्याकाशसंयोग आकाश एव शब्दं जनयति न भेर्यामपि तद्वत् संयुक्तसंयोगाल्पीयस्त्वबहुत्वाद्विशेषेऽपि प्रमेय एव परत्वापरत्वे न प्रमातर्यपीति । ननु परत्वापरत्वव्यवहारे ऽपि कारणशक्तिः कथं नाश्रीयते इति चेत् न कारणशक्तेः कार्योत्पाद एव नियमात् व्यवहारस्तु निमित्तमात्राधीन एवेति विशेषात् । एकस्यां दिशि वर्त्तमानयोर्मूर्त्तयोरल्पतरसंयुक्तसंयोगादपरत्वं तदपेक्षं च बहुतरसंयुक्तसंयोगात् परत्वम् । विनाशस्तु परत्वापरत्वयोः क्वचिदपेक्षाबुद्धिनाशात् क्वचिदसमवायिकारणसंयोगनाशात् क्वचिदाश्रयनाशात् क्वचिदाश्रयनाशसंयोगनाशाभ्यां क्वचिदपेक्षाबुद्धिनाशसंयोगनाशाभ्यां क्वचिच्च सर्वनाशैरिति सप्तधा(?) तदुक्तम्—

अपेक्षाबुद्धिसंयोगद्रव्यसंयोगनाशनात् ।
पृथक् द्वाभ्यां च सर्वेभ्यो विनाशः सप्तधानयोः ॥ इति ।

अथ बुद्धिः । विषयप्रवणत्वं बुद्धित्वम् । इच्छासाक्षात्कारणात्मविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं

था । सा च द्विविधा विद्या चाविद्या च ।
तत्र विशेष्यावृत्त्यप्रकारकं ज्ञानं विद्या मिथ्याज्ञा-
नमविद्या । तत्र विद्या चतुर्विधा प्रत्यक्षलै-
ङ्गिकस्मृत्यार्षलक्षणा । तत्रेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं
प्रत्यक्षम् । अर्थजन्यं ज्ञानं वा ज्ञानाकरणकं ज्ञानं
वा साक्षात्कारिज्ञानं वा । साक्षात्त्वं सामान्यविशेष-
रूपत्वमित्यर्थः । एतद्द्वयमीश्वरप्रत्यक्षसाधारणम् । स्मृत्य-
जनकज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम् । शब्दे-
तरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयो-
गाश्रयत्वं वा । नक्तञ्चरनयनरश्मिः नेन्द्रियं किन्तु तेजो-
न्तरमेव । शब्दरूपेतरोद्भूतविशेषगुणानाश्रयत्वमिति त-
दुपग्रहाय कर्त्तव्यमित्यन्ये । इन्द्रियाणि तु घ्राणरसनत्वक्-
चक्षुःश्रोत्रमनांसि षट्(१) । सन्निकर्षश्चैषां संयोगः संयुक्त
समवायः संयुक्तसमवेतसमवायः समवायः समवेत
वायो विशेषणविशेष्यभावश्च । संयोगेन द्रव्याणां संयु-
समवायेन द्रव्यगतजातीनां गुणानां कर्मणां च यन श-
क्तसमवेतसमवायेन गुणकर्मगतजातीनां ए ां विशेषण-
ब्दस्य समवेतसमवायेन शब्दत्वकत्वगत

(१) घ्राणरसनचक्षुश्रोत्रत्वङ्मनांसि ष-पा० ३ पु० ।
(२) ग्रहणमित्यधिकं ३ पु० ।

विशेष्यभावेनाभावस्य ग्रहणम् । तत्र वहिर्द्रव्याणां महत्त्वे सत्युद्भूतरूपवत्त्वं योग्यता बाह्यद्रव्यगतसामान्यगुणकर्मणामुद्भूतरूपवत्त्वमहत्त्वैकार्थसमवेतत्वं सामान्यानां च योग्यव्यक्तिगतत्वं शब्दस्य कर्णशष्कुल्यवच्छेदेनोत्पत्तिः तत्सामान्यस्य योग्यशब्दगतत्वमेव संसर्गाभावस्य योग्यप्रतियोगिकत्वम् अन्योन्याभावस्य योग्याधिकरणत्वम् स्वरूपयोग्यता भवति हि स्तम्भः पिशाचो न भवतीति चाक्षुषी प्रतीतिः । विशेषणता च सम्बन्धान्तरगर्भा शुद्धा चेति द्वयी । तत्राद्या संयुक्तविशेषणतादिभेदेन षोढा यथा संयुक्तविशेषणतया द्रव्यविशेषणीभूताभावग्रहणम् संयुक्तसमवेतविशेषणतया रूपादौ रसाभावग्रहणम् संयुक्तसमवेतसमवेतविशेषणतया रूपत्वादौ रसत्वाद्यन्योन्याभावग्रहणम् समवेतविशेषणतया ककारादौ गत्वाद्यभावग्रहणम् समवेतसमवेतविशेषणतया कत्वादौ गत्वाद्यन्योन्याभावादिग्रहणम् । विशेषणविशेषणतया चाभावादिवैधर्म्यादिग्रहणम् । सामान्यलक्षणा च प्रत्यासत्तिर्विशेषणताविशेष एव । भासन्ते ह्यतीतानागतधूमादयो धूमत्वसामान्यविशेषणतया सेयं संयुक्तसमवेतविशेषणता । संयुक्तसमवेतसमवेतविशेषणतया च रूपत्वादिसामान्यविशे-

पणतया च अतीतानागतरूपादय इत्याद्यूह्यम् । योगजधर्मश्च प्रत्यासत्त्यन्तरमेव तत्संस्कृतेन मनसातीतानागतस्वरूपायोग्यपरमाण्वाकाशादीनामनिरासात् । ज्ञानलक्षणा तु संयुक्तसमवेतविशेषणतैव । मनःसंयुक्तात्मसमवेतज्ञानविशेषणतया परमाणुप्रभृतीनामपि भानात् । भवति हि परमाणुमहं जानामीति प्रत्यक्षम् बहिर्द्रव्यग्रहे चतुर्विधः सन्निकर्षः तन्त्रं सचेन्द्रियार्थयोरन्योन्यमिन्द्रियावयवार्थावयवयोरन्योन्यमिन्द्रियावयवार्थयोरर्थावयवेन्द्रिययोश्च । तदेतद् द्विविधम् । निर्विकल्पकं सविकल्पकं च । तत्राद्यं वैशिष्ट्याविषयकं निष्प्रकारकं वा । न तत्र प्रमाणमिति चेत् न विशिष्टज्ञानस्यैव तत्र प्रमाणत्वात् । न हि विशेषणज्ञानमन्तरेण विशिष्टज्ञानमुत्पद्यते अनुमित्यादौ तथा दर्शनात् । तथा च गौरिति प्रत्यक्षं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वादनुमितिवत् । न च परोक्षत्वमुपाधिः प्रत्यभिज्ञाने साध्याव्यापकत्वात् नापि विशिष्टविशेषणत्वं पक्षेतरत्वात् न च व्याप्यत्वासिद्धिः अनुमितौ साध्यस्य शाब्दज्ञाने पदार्थस्य विशेषणस्य ज्ञातविशिष्टधीमात्रे जनकत्वदर्शनात् । न च विशेषणतावच्छेदकप्रकारकज्ञानं तत्र तन्त्रं न तु

विशेषणज्ञानमिति वाच्यं लाघवेन विशेषणज्ञानस्यैव जनकत्वकल्पनात् । किञ्च प्राथमिकगौरिति प्रत्यक्षे गोत्वस्य विशेषणस्य पूर्वानुभूतस्य कथं निर्विकल्पक-मन्तरेण ज्ञानं स्यात् । पूर्वजन्मानुभवस्य प्राग्भवीय-संस्कारद्वारा कारणत्वकल्पनापेक्षया तज्जन्मानुभवस्यैव कल्पनौचित्यात् । जागराद्यज्ञाने च विशिष्ट(१)-ज्ञानत्वेनाव्यवहितविशेषणज्ञानजन्यत्वमनुमेयं विशि-ष्टज्ञानत्वात् । न च विशेषणवैयर्थ्यं निर्विकल्पके व्यभि-चारवारकत्वेन(२) सार्थकत्वात् । तदसिद्धिदशाया तत्र कथं व्यभिचार इति चेत् न असिद्धेः परेण व्यभि-चारोद्भावनस्य दृष्टत्वात् । अनवस्थया व्याप्तिग्रह एव न स्याद्यदि विशिष्टज्ञानत्वादिति न क्रियेत । ततो येन विशेषणेन विना व्याप्तिर्ग्रहितुं न श-क्यते तदेव सार्थकं न तु व्यभिचारवारकमेवेत्य-पि वदन्ति । विशिष्टज्ञाने च विशेषणज्ञानविशेष्येन्द्रि-यसन्निकर्षस्तदुभयासंसर्गाग्रहश्च कारणम् । विशेषण-सन्निकर्षोपीत्येके । तच्चैतदुभयमपि साक्षात्कारि इन्द्रिय-जन्यत्वस्यैव साक्षात्त्वप्रयोजकत्वात् । अयं गौरितिसा-क्षात्कारे गोशब्दोप्युपनीतो भासते चन्दने सौरभवत् ।

(१) विशेष—पा० २ पु० । (२) वारणेन—पा० ३ पु० ।

यद्वा तटस्थ एव शब्दः न तु विशिष्टप्रत्ययविषयः द्वे द्रव्ये इति विशिष्टज्ञाने द्वित्ववत् तस्माद् वृत्तिरूपं तु वैशिष्ट्यं तत्रापि स्फुरति संज्ञास्मारकं तु निर्विकल्पकमेव यदुक्तम् ।

यत् संज्ञास्मरणं नाम न तदप्यन्यहेतुकम् ।
पिण्ड एव हि दृष्टः सन् सञ्ज्ञां स्मारयितुं क्षमः ॥ इति ।

अथ लैङ्गिकम् । तत्र व्याप्तिविशिष्टः पक्षधर्मो लिङ्गं तत्परामर्शः परामृश्यमाणं वा तदेवानुमितिकरणम् । ननु कथमुत्तरः पक्षः अतीतानागतधूमादेरसतः करणत्वानुपपत्तेरिति चेत् न तत्र धूमादिप्रागभावप्रध्वंसयोरेव विद्यमानयोः करणत्वात् । तयोरपि सामान्यतो वह्निव्याप्यत्वात् । नहि यत्र धूमप्रागभावप्रध्वंसौ तत्र न वह्निरिति । अधूमाद् धूलीपटलादेः कथं वह्न्यनुमितिरिति चेत् न ब्रूमो धूमः करणमपि तु व्याप्यत्वेन परामृश्यमाणं करणमिति । तथा च तादृप्येण परामृश्यमाणं धूलीपटलमपि कथं न करणं स्यात् पूर्वदिनवृत्तितया निश्चितादिदानीं सदसत्त्वाभ्यां सन्दिह्यमानात् कथमनुमितिः स्यात् धूमध्वंसयोरुभयोरपि सान्दिग्धत्वादिति चेत् न श्वस्तनत्वविशिष्टधूमध्वंसस्य तत्रापि निश्चितत्वात् सत्यपि धूमे विशेषणतावच्छेदकस्य श्वस्तनत्वस्याभावादित्यलमनेन ।

तत्रापि व्याप्तिरव्यभिचरितः सम्बन्धः । ननु व्यभिचारः साध्यात्यन्ताभावसामानाधिकरण्यं तदभावश्चाव्यभिचारः कथं केवलान्वयिनि स्यात् तत्र साध्यात्यन्ताभावाप्रसिद्धेरिति चेत् न केवलान्वयिनि सम्बन्धमात्रस्यैव व्याप्तित्वात् तदतिरिक्तस्थले त्वव्यभिचरितत्वस्योक्तत्वात् । एवं सत्यननुगम इति चेत् न अननुगतस्यैवानुमितिजनकत्वात् । अनुमितित्वावच्छिन्नं प्रति पक्षधर्मताज्ञानस्यैव जनकत्वात् अनुमितिविशेषं प्रति व्याप्तिविशेषस्य प्रयोजकत्वात् । यद्वा अविनाभावसम्बन्धो(१) व्याप्तिः। ननु साध्यं विना साधनस्याभावो वाऽविनाभावः साध्यसद्भावे साधनसद्भावो वा द्वयमपि व्यभिचारि साधारणमिति चेत् न साध्यं विनेति साध्यात्यन्ताभाववति साधनस्याभाव इत्यर्थत्वात् । तथा च साध्यात्यन्ताभावासामानाधिकरण्यमेव पर्यवस्यति साध्यविशेषमादायानुपपन्नमिदं नहि महानसीयवह्न्यभाववति पर्वतीयोपि धूमो न वर्तत इति चेत् न साध्यसामान्याभावस्य विवक्षितत्वात् । विशेषाभावाधिकरस्य सामान्याभावस्यानुभवसिद्धत्वात् । भवति हि वह्निरत्र नास्ति महानसीयो वह्निरत्र ना-

(१) अविनाभूतः सम्बन्धो—पा० ३ पु०।

स्तीति प्रतीतिभेदः प्रतियोगितावच्छेदकभेदादभावभेदानुभवात् वह्नित्वमहानसीयवह्नित्वयोः प्रतियोगितावच्छेदकयोर्भेदात् विशेषाभावस्य विशेषान्तराविरोधित्वात् सामान्याभावस्य च तद्विरोधित्वात् विशेषाभावनिश्चयेऽपि सामान्याभावसन्देहाच्च । भवति हि वायौ पार्थिवादिरूपविशेषाभावनिश्चयेऽपि वायौ रूपं नवेति सन्देहः । स कथं सामान्याभावमन्तरेण स्याद विशेषाभावानां निश्चितत्वात् । यद्वा कात्स्न्र्येन सम्बन्धो व्याप्तिः । ननु कृत्स्नपदं साध्यपरं चेत् तदा कृत्स्नस्य साध्यस्य साधनेन सम्बन्धो नास्त्येव नह्ययोगोलकीयेनापि वह्निना धूमस्य सम्बन्धः । अथ कृत्स्नस्य साधनस्य साध्येन सम्बन्ध इत्युच्यते तदपि नास्ति नहि कृत्स्नस्य महानसीयादेर्धूमस्यैकेन साध्येन सम्बन्धः संभवति । एतेन कृत्स्नस्य साधनस्य कृत्स्नेन साध्येन सम्बन्ध इत्यर्थोपि निरस्तः । मैवं साधनसमानाधिकरणयावद्धर्मसमानाधिकरणसाध्यसामानाधिकरण्यस्य विवक्षितत्वात । यद्वा प्रतियोगिव्यधिकरणसाधनसमानाधिकरणा(१)त्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यस्य विवक्षितत्वात् । यद्वा प्रतियोगिविरुद्धस्वसमानाधिकरणा-

(१) स्वसमानाधिकरणा—पा० २ पु० ।

त्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यस्य विवक्षितत्वात् । इदं संयोगि द्रव्यत्वादित्यत्र यद्यपि द्रव्यत्वं यत् साधनं तत्समानाधिकरणात्यन्ताभावस्य प्रतियोगि च साध्यं संयोगस्याव्याप्यवृत्तित्वादत उक्तं प्रतियोगिव्यधिकरणेत्यत्यन्ताभावविशेषणं संयोगात्यन्ताभावस्याप्रतियोगिसमानाधिकरणत्वात् । यद्यपि संयोगमात्रमत्र साध्यं न तु संयोगविशेषः संयोगत्वावच्छिन्नस्य चात्यन्ताभवो न द्रव्यत्वसमानाधिकरणः यत्रैकस्य संयोगस्याभावस्तत्र संयोगान्तरसत्त्वात् । न च सर्वेषां संयोगानामव्याप्यवृत्तितया संयोगसामान्याभावस्याप्यव्याप्यवृत्तित्वमिति वाच्यम् विशेषाभावाव्याप्यवृत्तित्वेऽपि सामान्याभावस्य व्याप्यवृत्तित्वात् । तथाप्याकाशं मनःसंयोगि विभुत्वादित्यत्र विभुत्वसमानाधिकरणात्यन्ताभावप्रतियोगि भवत्येव मनःसंयोगित्वमिति तदुपग्रहार्थं विशेषणस्यार्थवत्त्वात् । वस्तुतो द्रव्यं संयोगि द्रव्यत्वादित्यत्र संयोगवत्त्वं साध्यते तच्च व्याप्यवृत्त्येव संयोगवत्त्वं हि संयोगसमवायः क्वचिद्धितसमासेभ्यः सम्बन्धाभिधानं त्वतल्भ्यामिति कात्यायनवचनात् संयोगस्याव्याप्यवृत्तित्वेऽपि तत्समवायस्य व्याप्यवृत्तित्वात् तस्यैव च साध्यत्वात् संयोगात्यन्ताभाववत्यपि प्रदेशे

तत्समवायस्य सत्त्वात् । वायौ रूपात्यन्ताभाववत्यपि रूपसमवायाभ्युपगमादिति प्रतियोग्यसमानाधिकरणेत्यादिविशेषणमन्यादेयमेव । यद्वा अनौपाधिकः सम्बन्धो व्याप्तिः । ननूपाधिः साध्यव्यापकत्वे सति साधनाव्यापकः व्यापकत्वं च तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं प्रतियोगित्वं च विरोधित्वं तच्च सहानवस्थाननियमः नियमश्च व्याप्तिरेवेति चक्रकमिति चेत् न यावत्स्वव्यभिचारिसाध्यसामानाधिकरण्यस्यानौपाधिकत्वेनोक्तत्वात् । स्वसाधनं व्यभिचारि येभ्य इति स्वव्यभिचारिणः साधनाव्यापकाः तान् व्यभिचरितुं शीलं यस्य साध्यस्य तेन सामानाधिकरण्यमित्यर्थात् । तेन साधनाव्यापकाना यावता साध्यमव्याप्यं चेत् तदा साध्याव्यापकत्वादनौपाधिकत्वं पर्यवस्यति । ननु साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिलक्षणं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वमेवं स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वं चोपाधिर्न व्याप्नोति प्रत्यक्षत्वस्यात्मनि श्यामत्वस्य काककोकिलादौ सत्यपि तत्रोपाधेरसत्त्वात् न च पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वं तल्लक्षणं प्रकृते ऽपि बहिर्द्रव्यप्रत्यक्षत्वस्य पर्यवसितस्य साध्यस्यौत्पत्तिकनरश्यामत्वस्य च

व्यापकत्वात् तदुक्तम् ।

वाद्युक्तसाध्यनियमच्युतोपि कथकैरुपाधिरुद्भाव्यः ।
पर्यवसितं नियमयन् दूषकताबीजसाम्राज्यात् ॥

इति वाच्यम् जलं प्रमेयं रसवत्त्वादित्यत्र गन्धवत्त्वस्योपाधित्वप्रसङ्गात्। भवति हि रसवत्त्वावच्छिन्नप्रमेयत्वस्य गन्धवत्त्वं व्यापकम् । अत एव साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वमित्याद्यपि निरस्तम् । किञ्च पक्षेतरोप्येवमुपाधिः स्यात् सोपि हि साध्यव्यापकः साधनाव्यापकश्चेति । बाधोन्नीतः पक्षेतर उपाधिरेव यथा वह्निरनुष्णः कृतकत्वादित्यत्र वह्नीतरत्वमिति चेत् न तदन्यत्रातिव्याप्तेरुक्तत्वात् । ननु पक्षेतरस्योपाधित्वमापाद्यते तत्रोपाधिलक्षणस्यातिव्याप्तिर्वा बोध्यते । नाद्यः स्वव्याघातकत्वेनानुमानमात्रोच्छेदकतया स्वव्यावृत्तिद्वारा साध्यव्यावृत्तिवत् साध्याभावव्यावृत्तेरपि तेनापादयितुं शक्यत्वात्तस्यानुपाधित्वात् । न द्वितीयः साध्यव्यापकत्वसंशयेन तत्र तन्निश्चयगर्भतल्लक्षणागमनादिति चेत् न उपाधित्वापादनपक्षेपि स्वव्याघातकत्वादनुपाधित्वमिति न सम्भवति व्यभिचारोन्नयनादेर्दूषकत्वप्रयोजकस्यैवमपि सत्त्वात् उपाधिलक्षणेऽप्यतिव्याप्तिः पक्षेतरे सम्भवत्येव पक्षे साध्यव्यापकत्वसन्देहेऽपि तदन्यत्र-

तन्निश्चयात् । अन्यथा पक्षे तत्सन्देहेनानुपाधित्वे सन्दिग्धोपाध्यु(१)च्छेदप्रसङ्गात् । मैवं पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वं पर्यवसितत्वं च साध्यप्रसिद्ध्यनुगुणरूपावच्छिन्नं साध्यं यथा स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वम् कोकिलादिश्यामत्वाव्यापकमप्यौत्पत्तिकनरश्यामत्वावच्छेदेन वैद्यकात् शाकपाकजत्वस्य व्यापकत्वम् यथा वा वायुः प्रत्यक्ष उद्भूतस्पर्शवत्त्वादित्यत्रोद्भूतरूपवत्त्वं बहिर्द्रव्यप्रत्यक्षत्वं प्रत्यन्वयव्यतिरेकाभ्यां तद्व्यापकत्वनिश्चयात् । यद्यपि व्यभिचारित्वेन साधनस्य साध्यव्यभिचार उन्नीयते स उपाधिः तथाहि वह्नित्वं धूमवत्त्वव्यभिचारि धूमवत्त्वव्यापकार्द्रेन्धनप्रभववह्निमत्त्वव्यभिचारित्वादेवमन्यत्रापि केचिद्व्याप्यत्वासिद्ध्युन्नायकत्वमुपाधेर्दूषकत्वमाहुः तथाहि वह्निमत्त्वं धूमवत्त्वव्याप्यं धूमवत्त्वव्यापकार्द्रेन्धनप्रभववह्निमत्त्वाव्याप्यत्वात् । यद्यद्व्यापकाव्याप्यं तत्तदव्याप्यमिति व्याप्तेः । अन्ये तु सत्प्रतिपक्षोत्थापकतयोपाधेर्दूषकत्वमाहुः । तथाहि पर्वतोऽयं धूमवान् वह्निमत्त्वादित्यत्रार्द्रेन्धनप्रभववह्निमत्त्वेनोपाधिना स्वव्यतिरेकद्वारा सत्प्रतिपक्षत्वम् पर्वतोऽयं निर्धूमः आर्द्रेन्धनप्रभववह्निरहितत्वादिति ।

(१) सर्वोपाध्यु—पा० २ पु० ।

यद्यावृत्त्या पक्षे साध्यसाधनसम्बन्धो व्यावर्तते स धर्म-स्तत्र हेतावुपाधिरित्यन्ये। आचार्यास्तु समव्याप्तस्यैवोपा-धित्वमाहुः(१) तथाहि यद्धर्मोऽन्यत्र प्रतिबिम्बते स उपा-धिरित्युच्यते तदुपाधेर्व्याप्यत्वं धर्मः स्यात् तदा साधनत्वा-भिमते स प्रतिबिम्बेत तेन साध्यव्याप्यत्वमायाति दूषकत्वार्थं च साध्यव्यापकत्वमपेक्षितं साध्याव्यापक-व्यभिचारित्वेन हेतोः साध्यव्यभिचारित्वसम्भवात्। तथा च साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वमिति तल्लक्षणं तदेवमाहुः।

अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा॥

किञ्च।

एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः।
साध्याभावाविनाभावी(२) स उपाधिर्यदत्ययः॥ इति।

यदभावो व्यभिचारं विरुणद्धि स धर्मस्तत्र हे-तावुपाधिरित्यादि। विषमव्याप्तोऽप्युपाधिर्दूषकताबीजसा-म्यादित्यपरे।

हेत्वाभासास्तु विरुद्धासिद्धसन्दिग्धास्त्रय एव न तु

(१) समव्याप्तमेवोपाधिमाहुः—पा० ३ पु०।
(२) विनाभावः—पा० १ पु०।

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्त) २

(१६) मीमांसाबालप्रकाश जैमिनीयद्वादशाऽध्यायार्थसंग्रह श्रीभट्टनारायणात्मज भट्टशङ्करविरचित । (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् भाट्टशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्ण (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवर श्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्याल मलङ्कृत । (वेदान्त) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्याय श्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचित सम्पूर्णम् (वेदान्त) ३

(२१) श्रीहर्षप्रणीत खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्त) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्यया ऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रदीपिका मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्त) २

(२५) क्रोडपत्रसंग्रह । अत्र श्री कालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्या अन्यथानुमानगादाधर्या अन्यथानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि २

(२६) ब्रह्मसूत्रम् द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टविरचितसिद्धान्तसेतुकाऽभिधटीकासहित श्रीदेवाचार्यप्रणीत सिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चय । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेप । मणिभद्रकृतटीकया सहित । हरिभद्रसूरिकृत । १

अद्वैतमार्तण्ड प्रकाशव्याख्यासहित ।

प्रमेयरत्नार्णवश्च ... १

(२९) अनुमानचिन्तामणिव्याख्याया शिरोमणिकृतदीधित्या जागदीशी टीका । ११

(३०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित परिभाषा—संस्कारप्रकाशात्मक । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित आह्निकप्रकाश ६

(३२) स्मृतिसारोद्धार वेदशास्त्रविश्वम्भरत्रिपाठिसंकलित । ७

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २

(३४) प्रस्थानरत्नाकर । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचित १

(३५) वेदान्तपारिजातसौरभ नाम ब्रह्ममीमांसाभाष्य श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित योगसिद्धान्तचन्द्रिकासंज्ञया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्मामृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाश । कोश । विद्वद्वरश्रीमहेश्वरसूरिविरचित । २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविट्ठलनाथदीक्षितविरचितटिप्पणसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकरणं श्रीसुबोधिनीटिप्पण्यो प्रकाश गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित २

(४०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित पूजाप्रकाश । ■

(४१) वेदान्तसिद्धान्तसंग्रह । श्रुतिसिद्धान्तापरनामक । श्रीमद्ब्रह्मचारिवनमालिमिश्रविरचित । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता । १

(४२) स्वानुभवादर्श । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचित । स्वकृतटीकाविभूषितश्च । १

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी




THE

# CHOWKHAMBÂ SANSKRIT SERIES,

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 255

# प्रशस्तपादभाष्यटीकासंग्रहः ।

तत्र

## कणादरहस्यम् ।

श्रीशङ्करमिश्रविरचितम् ।

प्रशस्तपादभाष्यसमालोचनं तर्कालङ्कारभाष्यपरीक्षा च ।

वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालयाध्यक्षेण पण्डित विन्ध्येश्वरीप्रसादद्विवेदिना प दुण्ढिराजशास्त्रिणा च संस्कृतम् ।

# PRAŚASTAPÂDABHÂSHYATÎKASAMGRAHA

A Collection of Commentaries on the Prasastapadabhashya,

KANADARAHASYAM

By SRÎ SANKARA MISRA

and Reviews on the Prasastapâda Bhashya and Tarkalankâra's Vaiseshika Bhâshya

Edited by *Pandit Vindhyesvarî Prasâda Dwived Librarian, Government Sanskrit College Benares*

FASCICULUS II—२

*PUBLISHED & SOLD BY THE SECRETARY*
CHOWKHAMBA SANSKRIT SERIES OFFICE BENARES
AGENTS OTTO HARRASSOWITZ LEIPZIG

*at the Vidya Vilas Press Benares*
1917
*Price Rupee one*

पञ्च षड् वा तथाहि साध्याभावव्याप्तो विरुद्धः यथा नित्यः शब्दः कृतकत्वात् अयमश्वो विषाणित्वात् एवं विशेषविरुद्धमपि तद्यथा अगुरुप्रभववह्निमानयमसुरभिधूमवत्त्वादिति । असाधकतानुमितौ नियमांशो व्यर्थः तथाहि विषाणित्वमश्वत्वासाधकं तदभावव्याप्यत्वादित्यत्र तदभावसमानाधिकरणत्वादित्यस्यैव प्रयोजकत्वादिति चेत् नेदमसाधकं विरुद्धत्वादेर्व प्रयुक्ते व्यर्थविशेषणत्वासम्भवात् विरुद्धत्वलक्षणे नियमांशप्रवेशेपि न क्षतिः अन्यथा धूमवत्त्वादिति कृते धूम एव क इति प्रश्ने तल्लक्षणे आर्द्रेन्धनप्रभववह्नित्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकधर्मवत्त्वं धूमत्वमित्यत्रार्द्रेन्धनेत्यादिविशेषणानर्थक्यप्रसङ्गात् । असिद्धस्तु त्रिविधो व्याप्यत्वासिद्धः स्वरूपासिद्धः आश्रयासिद्धश्च । व्याप्तिपक्षधर्मत्वाभ्यां प्रमितिसिद्धिस्तदभावो ह्यसिद्धिः तत्र प्रथमा विपक्षबाधकतर्कानवतारेणासङ्कीर्णा अन्यत्र व्यभिचारसङ्कीर्णा यत्र सहचारदर्शनं व्यभिचारदर्शनं चास्ति विपक्षबाधकस्तर्को नास्ति तद्यथा मनो विशेषगुणवत् मूर्तत्वात् घटवत् एवमाकाशं न शब्दाश्रयः द्रव्यत्वादात्मवत् एवमाकाशं मूर्त्तं बहिरिन्द्रियग्राह्यगुणवत्त्वादित्यादि इयमेवाप्रयोजकस-

न्दिग्धानैकान्तिकसन्दिग्धोपाध्यादिरूपेण तत्र तत्र प्रसिद्धा । स्वरूपासिद्धिर्यथा शब्दो नित्योऽनित्यो वा सावयवत्वात् नित्यगुणत्वादित्यादि शब्दो द्रव्यं गुणत्वत्वात् कर्मवत्त्वादित्यादि । आश्रयासिद्धिरप्याश्रयस्वरूपासिद्ध्या तद्विशेषणासिद्ध्या च तत्र प्रथमा यथा गगनारविन्दं सुरभि अरविन्दत्वात् । निश्चितानन्वयत्वादिदृष्टान्तार्थकोदाहरणमिति चेत् न आपाततोन्वयस्फुरणात् । द्वितीया च(१) सिद्धसाधनस्थले आश्रयस्य विशेषणं सन्देहः सिषाधयिषा वा तयोरभावात् यथा प्रत्यक्षसिद्धवह्निमत्त्वादिस्थले तदनुमानं तदाहुः । न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातार इति । क्वचित्तु निश्चितसाध्येऽपि पक्षे ऽनुमितीष्टसाधनताज्ञानादनुमित्सया यथा श्रुतिसिद्धेप्यात्मनि ज्ञानवत्त्वे इच्छावत्त्वयत्नवत्त्वादिनानुमानम् अन्यथा श्रवणानन्तरं मननानवकाशादात्मा श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्तव्य इति विध्यनुपपत्तेः । तदाहुः प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका इति । सन्दिग्धानैकान्तिकम् । तच्च त्रिविधं साधारणासाधारणानुपसंहारिभेदात् । त्रयाणामपि संशयफलकत्वेन सन्दि-

(१) तु— पा० ३ पु० ।

रधत्वेनानुमानात्। तत्र साधारणानैकान्तिकं यथा इयं गौर्विषाणित्वात् शब्दो नित्यः शब्दत्वादित्यसाधारणम् अनध्यवसायफलकमपि संशयफलकत्वेनोक्तम्। तत्रानध्यवसितं हेत्वाभासान्तरमिति लीलावतीकृतः। सर्वमनित्यं प्रमेयत्वादित्यनुपसंहारिसाधारणस्यान्वयेनोभयकोटिसंस्पर्शात् संशायकता। असाधारणस्य व्यतिरेकेणोभयकोटिसंस्पर्शात्। अनुपसंहारिणश्च पक्ष एवोभयकोटिसंस्पर्शात् संशयजनकत्वम्। ननु बाधसत्प्रतिपक्षावपि हेत्वाभासौ तत्कथं त्रय एवेति चेत् न वह्निरनुष्णः कृतकत्वादित्यादौ हेतुमति पक्षे यत्र साध्याभावप्रमा तत्रानैकान्तिकत्वमेवेति सन्देहसिषाधयिषयोरभावादाश्रयासिद्धिर्वा तदुक्तं बाधायामपक्षधर्मो हेतुरनैकान्तो वेति। ह्रदो वह्निमान् धूमवत्त्वादित्यादिबाधस्थले तु स्वरूपासिद्धिरेव सत्प्रतिपक्षस्थले ऽपि द्वयोर्विरुद्धयोरन्यतरत्र व्याप्तिभङ्ग आवश्यक इति व्याप्यत्वासिद्धिरेव आपाततस्तद्ग्रहे ऽपि तत्र पर्यवसानध्रौव्यादिति। ये तु षष्ठं हेत्वाभासमप्रयोजकमाहुस्तेषामप्यप्रयोजकं व्याप्यत्वासिद्धावन्तर्भवति मणिमयूखे(१) वादिविनोदे च ग्राह्यम्।

(१) व्याप्यत्वासिद्धावन्तर्भावयद्भिर्मुक्तमुत्तरमधिकं मणिमयूखे—पा० ३ पु०।

करणे ज्ञानोपयोगिव्यभिचारिवैलक्षण्यात् व्याप्तिवच्छ-
ब्दशक्तिवच्चेति ज्ञानोपयोगित्वसाधनात् । तत्र पद-
विशेषसमभिव्याहृतवाक्यगतमन्वयबोधसामर्थ्यमाकाङ्क्षा
संसर्गे विरोधिरूपराहित्यं योग्यता परस्परान्वय-
विरोधिपदानन्तरितत्वं चासत्तिरिति सर्वं स्वप्रतिपन्नमेव
किञ्च तात्पर्यग्रहं विना श्लिष्टादौ नान्वयबोध इति तात्प-
र्यग्रहविलम्बेन लिङ्गस्यैव परिपूर्णत्वात् न चानाप्तोक्ते
व्यभिचारः अन्वयबोधसामर्थ्यासामर्थ्याभ्यां व्यभिचारा-
भावात् तर्ह्यन्वयबोधसामर्थ्यं किं योग्यतासत्तिभ्यां तत
एवान्वयबोधोपपत्तेरिति चेत् न स्वरूपयोग्यतायां
सत्यामपि सहकार्यपेक्षणात् । वाक्ये चेदन्वयबोधसा-
मर्थ्यमाकाङ्क्षासिद्धं तर्हि शब्दप्रामाण्यमिति चेत् न
लिङ्गभावेनैव सामर्थ्याभिधानात् । अस्ति हि किञ्चि-
द्वाक्यं यत्स्मारिताः पदार्था इतरेतरमन्वयिनो न च सर्वं
तथा गौरश्व इत्यादौ वह्निः करणत्वं पाकः कृतिरित्यादौ
चान्वयादर्शनात् । वाक्ये पदार्थस्मारकत्वं नास्तीति
चेत् पदकदम्बस्मारितत्वाक्यस्याभावात् । यद्वा एतानि
पदानि स्मारितार्थसंसर्गपूर्वकाणि आकाङ्क्षादिमत्पदक-
म्बत्वात् गामभ्याजेतिपदकदम्बवदिति वक्तृज्ञानावच्छे-
दकतया संसर्गसिद्धिः । नहि संसर्गाप्रतीत्या वाक्य-

रचना सम्भवति न च वक्तृज्ञानं संसर्गविषयमनुमीयमानं संसर्गमविषयीकृत्यानुमितं भवति न च संसर्गे संसृज्यमानादन्यो विशेषः किन्तु पूर्वानुमाने साक्षादेव संसर्गः सिद्ध्यति वक्तृज्ञानावच्छेदकतया तूत्तरत्रेति विशेषः। शुकादिवाक्यात् कथमर्थप्रतीतिः न हि तत्र संसर्गज्ञानपूर्वकतेति चेत् न तत्रापीश्वरसंसर्गज्ञानस्य सत्त्वात्। तथा च वेदतुल्यतैव शुकादिवाक्यानाम्। एवं भ्रान्तप्रतारकवाक्येऽपि संवादिनि संसर्गसिद्धिः अनभिमतः संसर्गः कथं न सिद्ध्यतीति चेत् न शब्दादेव तत्र संज्ञासंज्ञिसम्बन्धपरिच्छेदात्। शब्दस्य चानुमानान्तर्भूतत्वात् तथाहि न तात्पर्यविषयस्मारितार्थसंसर्गज्ञानपूर्वकाणीति साध्यत्वात्। एवं वेदेऽपि वक्तृज्ञानावच्छेदकतयैव संसर्गसिद्धिः इति न तदनुरोधात् स्वातन्त्र्येण शब्दप्रामाण्यं वेदवाक्यत्वेन पौरुषेयत्वसिद्धेः॥

तथाप्युपमानमस्तु प्रमाणान्तरमिति चेत् न शब्दादेव तत्र संज्ञासंज्ञिसम्बन्धपरिच्छेदात्। शब्दस्य चानुमानान्तर्भूतत्वात्। तथाहि गवयपदे व्युत्पित्सुं प्रति यदारण्यको ब्रूते गोसदृशो गवय इति तदा यो गोसदृशो धर्मी स गवयपदवाच्य इति वाक्यादेवासौ परिच्छिन-

त्ति किमत्र प्रमाणान्तरेण । ननु गवयत्वेन प्रवृत्तिनिमित्तेन गवयपदवाच्योयं पिण्ड इति प्रमात्वप्रमितिमाचक्ष्महे न चेयं वाक्यमात्रादुत्पत्तुमर्हति तदानीं गवयत्वस्य जातेरनुपस्थितेरिति चेत् न गोसादृश्यपदेन गवयत्वस्यैव लक्षणात् न हि गोसादृश्यं प्रवृत्तिनिमित्तं सम्भवति अखण्डत्वेन गुरुत्वात् तथाच गोसदृशो गवय इत्यस्य गवयत्वविशिष्टो धर्मी गवयपदवाच्य इत्यर्थः । तथाच किमवशिष्यते यदनुरोधादुपमानमिति । ननु स्यादप्येवं यद्यन्वयानुपपत्तिः स्यान्न चैवं प्रकृते यो गोसदृशः स गवयपदवाच्य इत्यन्वयसम्भवादिति चेत् न तात्पर्यानुपपत्तेर्लक्षणासम्भवात् । न हि यष्टीः प्रवेशय छत्रिणो यान्तीत्यादौ लक्षणास्थले काचिदन्वयानुपपत्तिं पश्यामः । किमत्र तात्पर्यमनुपपन्नमिति चेत् लघुनि प्रवृत्तिनिमित्ते गुरुणा प्रवृत्तिनिमित्तेन व्युत्पादनमनुपपन्नं तस्मादतिदेशवाक्या (द वनङ्गतो गवयत्वविशिष्टं पिण्डमुपलभ्य स्मृताऽतिदेशवाक्याद्युगप ) देवासौ व्युत्पन्नो यथा कम्बुग्रीववान् अर्थो घटो घटपदवाच्य इत्यादेर्वाक्यात् यद्वा कीदृग्गवयइति किं लक्षणकोसाविति नागरिकेण पृष्ट आरण्यको गोसादृश्यं लक्षणत्वेनातिदिशति गोसदृशो गवयइति । ततः प्रतिपन्नातिदेशवाक्यार्थः श्रोता ता-

दृशं पिण्डमनुसन्दधानः करितुरगमहिषादिष्वन्यतमप्रसिद्धेषु(१) कथंचिद्गोसादृश्यं पश्यन्नपि न व्युत्पद्यते वैधर्म्यतिरस्कृतत्वात् सादृश्यान्तरपरिप्लुतमतिः कदाचिद्वैधर्म्यं गोसादृश्यं गवयपिण्डं पश्यन्नूनमयं गवयपदवाच्यः गोसदृशत्वात् । यन्न गवयपदवाच्यो नासौ गोसदृशो यथा महिषमातङ्गादिरिति व्यतिरेकिणैव वाच्यत्वं परिच्छिनत्ति यथा का पृथिवीति पृथिवीपदव्युत्पित्सुं प्रति गन्धवती पृथिवीपदवाच्यं(२) लक्षणं परं शृणवत इदं पृथिवीपदवाच्यं गन्धवत्वादिति । यद्वा श्रुतातिदेशवाक्यो वनङ्गतो गवयत्वविशिष्टं पिण्डमुपलभ्य स्मृताऽतिदेशवाक्योऽनुमिमीते अयमसौ गवयपदवाच्यः असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् यन्न यत्पदवाच्यं तदसति वृत्त्यन्तरे वृद्धैर्न तत्र प्रयुज्यते यथा गोपदं महिषइति व्यतिरेकिणा तत्सिद्धिः । तत्तु(३)वृत्त्यन्तरव्यतिरेको दुरधिगमः व्युत्पित्सुं प्रति लक्षणया प्रयोगानुपपत्तेस्तदधिगमात् । न च गोसादृश्यस्यैव प्रवृत्तिनिमित्तताऽनुमानेन सिद्ध्यते न तु गवयत्वस्येति वाच्यं तस्य गौरवेण निरासात् अन्यथोपमानेप्यप्रतीकारात् गौरवा-

(१) पश्यन्नप्रसिद्धेषु—पा० ३ पु०

(२) पृथिवीतिवाच्यं—पा० ३ पु०

(३) न च—पा० ३ पु०।

वतारश्चेत्तदिहापि कथं न स्यात् क्लृप्तप्रमाणापेक्षया कल्प-
नीयस्य गुरुत्वाच्च । यत्तु सादृश्यं पदार्थान्तरमुपमानपरि-
च्छेद्यं न हि तदिन्द्रियवेद्यम् उभयनिष्ठसादृश्यस्यैकप्रति-
योग्यसन्निकर्षे ग्रहीतुमशक्यत्वात् संयोगवत् लिङ्गं च
नास्ति शब्देऽपि न सादृश्यविषयः शब्दमन्तरेणापि प्रती-
यमानत्वादित्युपमानमधिकं प्रमाणमिति तन्न सादृश्य-
प्रत्यक्षत एव ग्रहात् सामान्यस्यैव सादृश्यत्वात् गुणवृ-
त्तित्वेन द्रव्यगुणकर्मबहिर्भावात् सामान्यं न सप्रति-
योगिकमिति चेत् तद्भिन्नत्वे सति तद्गतभूयोधर्मव-
त्त्वरूपत्वात् तस्येति भेदांशस्तु सप्रतियोगिकत्वेन
तथा प्रतीयते तदुक्तम्—

सामान्यस्यैव भूयांसि गुणावयवकर्मणाम् ।

भिन्नप्रधानसामान्यं व्यक्तं सादृश्यमिष्यते ॥ इति ।

यद्यभेदोऽपि तत्प्रतीतिर्यथा—

गगनं गगनाकारं सागरः सागरोपमः ।

रामरावणयोर्युद्धं रामरावणयोरिव ॥

इत्यादौ तत्र व्युत्पत्तिबलादेतत्तुल्यं नान्यदिति बोधयति
न तु सादृश्यम् अवच्छेदभेदेन वा कथंचित्तत्रापि भेदो-
ऽन्वेष्टव्यः शबरस्वामिनापि यदुपमानमेयमुक्तं तत्रापि प्र-
त्यक्षमनुमानं वा सम्भवति एवमेतत्सदृशो स गौरिति प्रा-

न्तविपरीतप्रत्यभिज्ञानवत् प्रत्यक्षादेव ज्ञानमुदेतुमर्हति । भवति हि चैत्रदृष्टे स्मृते च मैत्रे अयं स इति प्रत्यभिज्ञानम्। यथा विशेष्यासन्निकर्षेपि तत् तद्वदिदमपि स्यात् तदुक्तं न हि यावत्प्रत्येतव्येन्द्रियसन्निकर्षः कारणमिति । अस्तु वा तदनुमानमेव तथाहि मद्गौरेतरसदृशी(१) एतन्निष्ठसादृश्यप्रतियोगित्वात् यन्निष्ठसादृश्यप्रतियोगि तत् तत्प्रतियोगिकसादृश्याश्रय इति सामान्यत एव व्याप्तिग्रहात् । एतेन यथा माषस्तथा माषपर्णः यथा मुद्गस्तथा मुद्गपर्णीत्याद्यपि शब्दानुमानयोरन्तर्निवेश्यं यदपीह सहकारतरौ मधुरं पिको रौति प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यादिप्रसिद्धपदसामानाधिकरण्यबलात् सङ्केतग्रहणं तदनुमानात् अयं पिकपदवाच्यः सहकारतरौ मधुररव(२)कर्तृत्वात् अयं मधुकरपदवाच्यः प्रभिन्नकमलोदरे मधुपानकर्तृत्वात् इति व्यतिरेकिसत्त्वात् शब्दविधयैव वा सङ्केतग्राहकमेतदिति दिक् ।

अर्थापत्तिरपि न मानान्तरम् । ननु कथमेतत् तथाहि जीवतो मैत्रस्य गृहे योग्यानुपलब्ध्याऽभावं निश्चित्य देवदत्तो बहिरस्तीति पांशुलपादा अपि प्रमिमते सेयं

(१) सा गौरेतत्सदृशी—पा० ३ पु० ।

(२) मधुररुत—पा० ३ पु० ।

प्रमा न तावत् प्रत्यक्षात् देवदत्तस्येन्द्रियासन्निकृष्टत्वात् न लिङ्गात् व्याप्त्यप्रतिसन्धानेपि जायमानत्वात् न शब्दात् तस्य तदानीमसत्त्वात् । तस्माद्विलक्षणमेव कारणमनुसरणीयं तच्च जीवतो बहिःसत्त्वं विना गृहासत्त्वमनुपपन्नमिति ज्ञानमेव पर्यवस्यति अनन्यथासिद्धत्वे सति तत्पूर्वभावित्वात् । एवं पीनो देवदत्तो दिवा न भुङ्क्ते इति श्रूयमाणे दिवाऽभोजिनः पीनत्वं रात्रिभोजनं विनाऽनुपपद्यमानं रात्रिभोजनं कल्पयति तामिमां श्रुतार्थापत्तिमाचक्षते । एवं वामेन पश्यतीति श्रुत्वा नूनं दक्षिणेन पश्यतीति ज्ञानं कथमर्थापत्तिमन्तरेणेति चेत् अत्रोच्यते जीवतो बहिःसत्वं विना गृहासत्त्वमनुपपन्नमिति ज्ञानं व्यतिरेकव्याप्तिं विषयीकुर्वदेवोदेति तथाच गृहासत्वेन लिङ्गेन बहिःसत्त्वमनुमीयत इत्यायातमर्थापत्तिरनुमानमिति । यदाहमिह तदा नान्यत्राहमिति स्वशरीर एव व्याप्तिग्रहात् । देवदत्तस्यासन्निकर्षे कथं पक्षधर्मताज्ञानं कथं वा व्यधिकरणं गृहासत्त्वं बहिःसत्त्वं कल्पयिष्यतीति चेत् न देवदत्तो बहिरस्ति जीवित्वे सति गृहनिष्ठाभावप्रतियोगित्वादिति मनसोपस्थापिते देवदत्ते हेतोर्ग्रहणात् । ननु जीवी क्वचिदस्तीति सामान्यतोदृष्टेन गृहस्यापि विषयीकरणात् योग्यानुपलब्ध्या च गृहा-

सत्त्वग्रहणात् प्रमाणयोर्विरोधप्रतिसन्धानानन्तरमविरोधाय बहिःसत्त्वकल्पने ह्यर्थापत्तिः प्रमाणमेव न ह्यत्रानुपपत्तिप्रतिसन्धानं कल्पकं येन व्याप्तिग्रहः स्यादिति चेत् न प्रमाणयोर्विरोधाभावात्। तथापि प्रामाण्याभिमानादपि विरोधप्रतिसन्धानाद्यत्र बहिःसत्त्वधीस्तत्र का गतिरिति चेत् न तत्रापि बहिःसत्त्वस्य जीविगृहासत्त्वेनैवानुमानात् । विरोधप्रतिसन्धानस्यापि व्याप्तिगर्भत्वात्। सहानवस्थाननियमस्य विरोधित्वात्। तथापि ज्योतिःशास्त्राद्देवदत्तस्य शतवर्षजीवित्वे गृहे सहचारदर्शनव्यभिचारादर्शनाभ्यां जीवी देवदत्तो गृह एवेति नियमे गृहीते पश्चाद्योग्यानुपलब्ध्या यत्र गृहासत्त्वधीस्तत्र जीवी न वेति संशयानन्तरं बहिरस्तीति धीर्नानुमानं नजीवित्वस्य लिङ्गविशेषणस्याप्यनिश्चयादिति चेत् न जीवित्वनिश्चयं विना तत्रापि बहिःसत्त्वकल्पनानुदयात्। मरणकल्पनाया अपि सम्भवात्।

ऐतिह्यमपि न मानान्तरं वटे वटे यक्षो मधुकरस्तरौ रौतीत्यादिप्रवादस्याप्तवाक्यत्वे शब्दानुप्रवेशात्। अनाप्तवाक्यत्वे प्रामाण्यानुपपत्तेः।

संभवोऽपि न मानान्तरं सहस्रे शतं सम्भवति खार्यां द्रोणः सम्भवति द्रोणे आढकमित्यादिना तदुदाह-

रणानामनुमानान्तर्भावात् सहस्रस्य शतघटितत्वात् ।

एवं लिपिरपि न मानान्तरं शब्दस्मारकतया लिपेः संसर्गबोधकत्वेन शब्दान्तर्भावात् ।

अभावोऽपि न मानान्तरं भूतले घटो नास्तीत्याद्यभावप्रतीतेरिन्द्रियकरणकत्वात् । इन्द्रियमधिकरणग्रहणमात्रोपक्षीणमभावधीस्त्वनुपलब्धेरेवेति चेत् न अन्धकारे त्वगिन्द्रियोपस्थिते नीले घटे पीतरूपाभावग्रहप्रसङ्गात् । अस्ति हि तत्राधिकरणग्रहणं प्रतियोगिस्मरणं पीतरूपानुपलम्भश्च । प्रतियोगिग्राहकेणेन्द्रियेण यत्राधिकरणग्रहणं तत्रानुपलब्धिरभावग्राहिकेति चेत् । उन्मील्याधिकरणं गृहीत्वा निमीलितनेत्रस्यापि अभावग्रहणप्रसङ्गात् । प्रतियोगिग्राहकेणेन्द्रियेण वस्त्वन्तरे गृह्यमाण एवानुपलब्धेरभावग्रह इति चेत् तर्हि नाधिकरणग्रहमात्रे चक्षुरुपक्षीणं किन्त्वभावग्रहेऽपि तदुपयोगो भक्त्या त्वयोच्यते । किञ्च प्रतियोगिग्राहकेणेन्द्रियेणाधिकरणग्रहस्य तन्त्रत्वे वायौ रूपाभावो चक्षुषा न गृह्येत न गृह्यत एवानुपलब्ध्या चक्षुषा किन्तु तत्रानुमानिकी रूपाभावप्रतीतिरिति चेत् न लिङ्गाभावात् । वायू रूपाभाववान् रूपवत्तया अनुपलभ्यमानत्वादात्मवदित्यनुमानमिति चेत् न त्वन्मते उपलम्भस्यातीन्द्रियतेति

तदभावस्या(१)प्यतीन्द्रियत्वात् । तदभावोपि प्राकट्याभावानुमेय इति चेत् न प्राकट्याभावस्य स्वरूपस्या(२)नुपलब्धिगम्यता यदि तदा रूपाभावस्यापि वार्यो तथा स्यात् । ज्ञातानुपलब्धिगम्यतायामनुपलब्धेरेव ज्ञानमशक्यमित्युक्तत्वात् । तस्मादनुपलब्धिरिन्द्रियसहकारिणीति न प्रमाणान्तरं योग्यानुपलब्धिश्चाभावग्राहिका सा च तत्प्रतियोगितदन्तरयावत्तदुपलम्भकसमवधाने सत्यनुपलब्धिः । अधिकरणे प्रतियोगिसत्त्वविरोधी वानुपलम्भो योग्यानुपलम्भः । अन्धकारे घटानुपलम्भो न प्रतियोगिसत्त्वविरोधी प्रतियोगिनि सत्यपि बाह्यालोकसहकारिविरहादनुपलम्भसम्भवात् । सालोकस्थले घटानुपलम्भो घटाभावप्रमापकः । नन्वभावेन सममिन्द्रियसन्निकर्षविरहात् कथं तद्ग्रह इति चेत् न विशेषणताप्रत्यासत्तेः सत्त्वात् । सम्बन्धान्तरमन्तरेण विशेषणतापि कथं स्यादिति चेत् अभावसम्बन्धबलादेव तदुपरक्तप्रतीतिसम्भवात् । उपरक्तप्रतीतौ सत्या विशेषणता तस्याञ्च सत्यामुपरक्तप्रतीतिरित्यन्योन्याश्रय इति चेत् न उपरक्तप्रतीतिजननयोग्य-

(१) अतीन्द्रियत्वेन तदभावस्या–पा० ३पु०

(२) स्वरूपमनुपलब्धिगम्यता–पा० ३ पु०

तायाः पूर्वमपि सत्त्वात् । योग्यतायामेव किं प्रमाण-
मिति चेत् उपरक्तप्रतीतिरेव अन्यथा तदसम्भवात् ।
ननु यथा भावानुपलब्धिरभावग्राहिका तथाऽभावानुपल-
ब्धिरपि भावग्राहिका किं न स्यात् । कथं न स्यात् ?
अन्वयव्यतिरेकसत्त्वात् । नन्वभावप्रतीतेः पूर्वं भावा-
नुपलब्ध्याऽभावग्रहणं कथं न स्यात् न स्यात्
विषयस्याभावस्याभावात् । साक्षात्कारिणि ज्ञाने वि-
षयस्यापि कारणत्वात् । ननु यत्रभाव ऐन्द्रिय-
कस्तदेन्द्रियसन्निकर्षाभावे कथमभावधीः ? भवति हि
गृहे चैत्राभावमगृहीत्वापि बहिर्निष्ठितस्य मैत्रस्य केनापि
चैत्रसदसत्त्वं पृष्टस्य चैत्राभावधीरिति चेत् न तस्या
आनुमानिकत्वात् । तद्गेहं तदा चैत्राभाववत् तद्वत्तया
स्मरणार्हस्याप्यस्मर्यमाणत्वादित्यनुमानस्य सत्त्वात् ॥

अथाविद्या । सा च संशयविपर्ययस्वप्नानध्यव-
सायभेदाच्चतुर्धा । तत्र व्यधिकरणप्रकारावच्छिन्नवि-
षयताप्रतियोगिज्ञानत्वमविद्यात्वं । यद्वा विशेष्यावृत्ति-
प्रकारकज्ञानत्वं । यत्र यन्नास्ति तत्र तत्प्रकारकज्ञा-
नत्वं वा । तत्रैकस्मिन्धर्मिणि विरोधिनानाप्रकारकं
ज्ञानं संशयः । स चायं समानधर्मजन्मा विप्र-
तिपत्तिजन्मा च । उपसर्जनीभूतनिषेधकोटिः स-

दा भ्रमापत्तेः। कारणान्तरसहकृता वासना यदि कारणं तदा कारणान्तरं लिङ्गं तदाभासौ न भवतः। तयोर्व्याप्तिग्रहाधीनत्वात्। असतश्च किञ्चिदपि प्रत्यव्यापकत्वात्। शब्दस्तदाभासो वा स्यादिति चेत् न तयोः सङ्केतग्रहाधीनप्रवृत्तिकत्वात्। असति च तदप्यनुपपत्तेः। इन्द्रियाणां तु संनिकर्षाधीनप्रवृत्तीनां तत्रासामर्थ्यात्। स्यात्तर्ह्यनिर्वचनीयख्यातिः। न स्यात् भ्रमदशायां रजतत्वेन बाधदशायां च शुक्तित्वेन तन्निर्वचनात्। अख्यातिरतर्हस्तु(१) न हि शुक्तौ रजतत्वं रजताभेदो वा भासते कारणाभावात्। भ्रमरूपविशिष्टज्ञानकल्पने कल्पनागौरवात् प्रवृत्तेरन्यथैवोपपत्तेः। पुरोवर्तिज्ञाने रजतस्मरणं दोषवशात्। प्रमुष्टतत्तासंज्ञानयोः तद्विषययोश्च भेदाग्रहः प्रवृत्तिकारणम्। ननु यथेष्टभेदाग्रहात् प्रवृत्तिस्तथानिष्टभेदाग्रहान्निवृत्तिरपि स्यात्। न हि शुक्तौ शुक्तिभेदोऽपि गृह्यतेऽन्यथाख्यात्यापत्तेरिति चेत् न उपस्थितेष्टभेदाग्रहस्य प्रवर्तकत्वात्। अनिष्टमपीदन्तयोपस्थितमेवेति चेत् न अनिष्टतावच्छेदकेन प्रकारेणानिष्टानुपस्थितेः। ताद्रूप्येण हि तदुपस्थितिस्तन्त्रम्

(१) अख्यातिरस्तु पा० ३ पु०।

अनिष्टतावच्छेदकं च रूपं शुक्तित्वं तद्वत्तया च तदनुपस्थितेः । इदं रजतं न शुक्तिरित्यत्रानिष्टमनिष्टतावच्छेदकेनैव रूपेण भासत इति तत्र प्रवृत्तिनिवृत्ती युगपत्स्यातामिति चेत् न स्वातन्त्र्येणानिष्टानुपस्थितेः । अभावप्रतियोगितया ह्यनिष्टमुपस्थितं तथा च स्वातंत्र्योपस्थितेष्टभेदाग्रहात् प्रवृत्तिमात्रं न तु निवृत्तिरपि तत्कारणस्य स्वातंत्र्योपस्थितानिष्टभेदाग्रहस्याभावादिति चेत् । मैवं । राजमन्दिरवर्तिरजतभिन्नमिदं रजतमिति भ्रमादप्रवृत्तिप्रसङ्गात् । इष्टस्याभावप्रतियोगितयोपस्थितेः सत्यज्ञानादप्येतादृशादप्रवृत्तिप्रसङ्गात् । तत्र विशिष्टज्ञानं प्रवर्तकमिति चेत् विसंवादिस्थले प्रवृत्तिरित्यत्रापि प्रवृत्तेः सम्भवाद्विशिष्टज्ञाने मानाभावात् । किञ्च इमे रङ्गरजते इति समूहालम्बनभ्रमे इष्टानिष्टयोर्द्वयोरपि स्वतन्त्रोपस्थिततयोभयत्रापि युगपत्प्रवृत्तिनिवृत्ती स्यातां न स्यातां चेमे रङ्गरजते न तु रङ्गरजते न तु रजतरङ्गे इत्यत्राप्रवृत्तिनिवृत्ती द्वयोरपीष्टानिष्टयोः पारतन्त्र्येणोपस्थितेः । किञ्च प्रवर्तकाज्ञाने वैशिष्ट्यमात्रं विषयत्वेन कल्प्यं न तु स्वतन्त्रोपस्थितेष्टभेदाग्रहः प्रवर्तकत्वेन भेदाग्रहात् । सचायं विपर्ययो द्विरूपः स्मर्यमाणारोपोनुभूयमाना-

रोपश्च स्मर्यमाणारोपे त्वारोप्योपस्थापकतया सा-
रूप्यग्रहस्तन्त्रमित्याचार्याः । अनुभूयमानारोपेऽपि
तिक्तो गुडः पीतः शङ्खइत्यादौ सारूप्यसंसर्गग्रहोऽस्त्येव
अत्र हि रसनगतपित्तद्रव्यस्य तैक्त्यं नयनगतपित्तद्रव्य-
स्य पीतिमा चारोप्येते तत्र निम्बे तैक्त्यस्य चिरबिल्वे
पीतिम्नश्चासंसर्गाग्रहसत्त्वादिति न्यायाचार्याः । संस्कारे
इन्द्रियेणेदं रजतमित्यादिविभ्रमो जन्यते प्रत्यभि-
ज्ञानवदिति न कारणाभावोपि विश्वासस्तु ज्ञानस्याप्रा-
माण्यं यथा त्वन्मते तथास्मन्मतेपि प्रामाण्यग्रहोपा-
यस्य समर्थप्रवृत्तिजनकत्वस्यानभ्यासदशापन्नस्थलेऽभ्या-
सदशापन्नस्थले तु तज्जातीयत्वस्य लिङ्गस्य विद्यमा-
नत्वादित्यलं विस्तरेण ।

अथ स्वप्नः । स च सिद्धोपयुक्तान्तःकरणज-
न्यं ज्ञानं सिद्धा च निद्रा यदा स्वप्नवहनाडीम-
ध्यवर्ति मनः तदा बहिरिन्द्रियसम्बन्धाविरहात् स्वप्न-
ज्ञानान्येव जायन्ते । तत्रापि त्वगिन्द्रियस्यापि सम्बन्ध-
विरहे सुषुप्तिः । तदुक्तं यदा त्वचमपि परिहृत्य मनः पु-
रीतति वर्तते तदा सुषुप्तिरिति । स्वप्नान्तिकप्रत्ययः क्वचित्
कथं प्रमा इति चेत् न खट्वायां शयानोस्मीत्यादिप्र-
त्ययानामप्यारोपरूपत्वात् खट्वान्तराभेदग्रहादिति स्यात् ।

(२) प्रशिचित्रिति पा० ३ पु० ।

अनध्यवसायोऽपि किं स्विदिदमिति ज्ञानं । न-न्विदं संशय एव न अत्र लिखितविरोधिनानाकोटित्वा-त् वाकारार्थासम्भेदात् । समानधर्मविप्रतिपत्तिभ्यामज-नितत्वात् । ननु व्यावृत्तोऽपि(१) धर्मः संशयकारणमेव स हिव्यावृत्तिद्वारा(२) द्वे कोटी स्मारयन् विरुद्धना-नाकोटिकं ज्ञानं जनयितुमिष्ट एव । तथा च पा-रमर्शसूत्रं समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्य-नुपलब्धिव्यवस्थातो विशेषापेक्षो विमर्शः संशय इति चेत् । न अननुभूतक्रमेलकः क्रमेलकमकस्मादुप-लभ्य किं स्विदिदमिति तावदनध्यवसितो भवति । त-दस्य तुरङ्गमतङ्गजादिव्यावृत्तं दीर्घग्रीवत्वलम्बोष्ठत्वादिकं धर्ममुपलभमानस्यैव न तावत्तुरङ्गमोयं मतङ्गजो वेति सं-शय उदेतुमर्हति । तद्व्यावर्तकधर्मोपलम्भात् । अन्यथा-त्यन्तसंशयप्रसङ्गात् । जिज्ञासाजनकत्वादिदमपि ज्ञानं संशय एवेति चेत् । न निश्चयभिन्नज्ञानत्वेनै-व जिज्ञासां प्रति कारणत्वात् । तच्च संशयानध्यवसाय-साधारणमेव किञ्च संशयस्योल्लिख्यमानकोटिकजिज्ञासा-जनकत्वं तस्मात् संशयभिन्न एवायमनध्यवसायः प्रका-

---

(१) व्यावृत्तोपीति–पा० ३ पु० ।

(२) व्यावृत्तिद्वारेति–पा० ३ पु० ।

रभेदात् विषयभेदात् कारणभेदाच्चेति सर्वं रमणीयम् ।

बुद्धिकार्यत्वात्तदानन्तर्यं सुखे तल्लक्षणं तु धर्मासाधारणकारणकात्मगुणत्वम्(१) । समानाधिकरणसमानकालीनसाक्षात्कारविषयताव्याप्यजातिमत्त्वे सति धर्मजन्यत्वं वा तच्चेन्द्रियार्थसन्निकर्षजन्यं स्रगाद्यभिमतविषयोपलब्धिजन्यम् । न चोपलब्ध्यैवेन्द्रियसन्निकर्षस्यान्यथासिद्धिः अन्वयव्यतिरेकबलेनेन्द्रियार्थसन्निकर्षस्य कारणत्वे सिद्धे ज्ञानस्य व्यापारत्वात् । तत्स्वमात्रवेद्यं परकीयं च सुखं मुखप्रसादाद्यनुमेयम् । चतुर्विधं चैतत् वैषयिकं मानोरथिकम् आभ्यासिकमाभिमानिकं च । वैषयिकस्य कारणञ्चोक्तमन्येषामभीष्टविषयानुस्मरणजन्यत्वम् । अभीष्टविषयोऽतीतानागतवर्तमानभेदेन त्रिविधः । तत्रानागतविषयस्य द्रव्यादिसम्भोगानुस्मरणान्मनोवधिकः स्वस्य वैदुष्याद्यसद्धर्मारोपादाभिमानिकम् । आभ्यासिकं तु सुबहुमृगयाद्यनुसेवनादिजन्यशरीराद्यवयवाभ्यासादिज्ञानजन्यम् । सुखं ज्ञानमेवेति चेत् । न अहं जाने अहं सुखीति विचित्रप्रत्ययात् प्रत्येतव्यभेदात् । ननु सुखं ज्ञानाभिन्नं ज्ञानसामग्रीजन्यत्वादिति चेत् । न तदसिद्धेः तदेकदेशजन्यत्वं चेच्छादौ

(१) कारणकगुणत्वमिति–पा० ३ पु० ।

व्यभिचारि तच्चैतदवान्तरानेकवैचित्र्यवत् । साम्राज्य-सुखस्वर्गादिरूपभेदवत्त्वात् स्वर्गे च वाक्यार्थे पदवचनं ।

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥

इत्यनुवादोपस्थिते सुखविशेषे स्वर्ग इति सङ्केत-करणात् । सुखत्वमेव दुःखासम्भिन्नत्वादिना सङ्कुचितं स्वर्गपदे प्रवृत्तिनिमित्तम ॥

सुखविरोधितया तदानन्तर्यं दुःखे लक्षणन्तु अ-धर्मासाधारणकारणकात्मगुणत्वं(१) समानाधिकरणस-मानकालीनसाक्षात्कारविषयव्याप्यजातिमत्वे सत्यधर्मज-न्यत्वं वा । तच्चेदमनिष्टविषयोपलम्भादिन्द्रियार्थसन्नि-कर्षादधर्माच्चोपजायते प्रतिकूलस्वभावकं(२) तादूप्ये-ण स्वविषयमनुभवं कुर्वदात्मानमुपहन्ति द्वेषजनकं प्रत्युत्पन्नमात्रवेद्यम् । अतीते सर्पव्याघ्रादावनुचिन्तन-प्रभवम् । अनागते तु सङ्कल्पजम् । त्रिविधन्तदाध्या-त्मिकमाधिदैविकमाधिभौतिकञ्च । परकीयं च दुःखं विच्छायत्वाद्यनुमेयं क्षणद्वयस्थायि स्वसाक्षात्कार-विनाश्यं नरकयातनाद्यनेकप्रभेदम् ॥

---

(१) कारणकगुणत्वमिति-पा० ३ पु० ।
(२) स्वभावमिति-पा० ३ पु० ।

अथ कार्यत्वादेव तदेककार्यत्वलक्षणया सङ्गत्या दुःखानन्तरमिच्छा । प्रयत्नासाधारणकारणात्मविशेषगुणवृत्तिगुणत्वव्याप्यजातिमत्वं तल्लक्षणम् । सा च सुखे निरुपाधिः तत्साधने स्रगादौ चोपाधिकी अनेकप्रकारा कामो—भिलाषो—रागः—सङ्कल्पः—कार्पण्यं—वैराग्यं—कपटो—भावः—स्पृहा—तृष्णा—लोभादिप्रभेदात् । तत्र मैथुनेच्छा कामः । पौनःपुन्येन विषयासङ्गश्च रागः । अनापन्नक्रियावश्यकर्त्तव्यता सङ्कल्पः । परेणापि भृतयादिना विनियुज्यमानस्यावश्यरक्षणेच्छा कार्पण्यम्(१) । दोषदर्शनाद्विषजप्रमित्यङ्गता वैराग्यं । परवञ्चनेच्छा कपटम् । अन्तर्निगूढेच्छा भावः । परद्रव्यादानेच्छा स्पृहा । अन्यायेन परद्रव्यादानेच्छा लोभः । अवश्यकर्तव्येपि स्वद्रव्यापरित्यागेच्छा तृष्णा । एवं तत्तत्क्रियाभेदोपाधिकयः सिसृक्षा—चिकीर्षा—संजिहीर्षादय इच्छाप्रभेदा द्रष्टव्याः । प्रयत्नधर्माधर्महेतुः । तत्र प्रयत्नं साक्षाज्जनयति धर्माधर्मौ साक्षात्प्रयत्नद्वारा च । भवति हि गङ्गास्नानाभिलापमात्राद्धर्मः परदाराभिलापमात्रादधर्मश्च । प्रयत्नद्वारा च विहितनिषिद्धयागहिंसादिगोचरं प्रयत्न-

(१) निरुपधिपरद्रव्यप्रहाणेच्छा कार्पण्यम् इति-पा० ३ पु०।

मुत्पाद्य धर्माधर्मौ जनयति । प्रत्यक्षोपलम्भोऽयमिति ॥

अथ द्वेषः । दुःखासाधारणकारणकात्मगुणत्वम् । इच्छाजन्यत्वे सति प्रयत्नसाक्षात्कारकारणात्मविशेषगुणत्वं द्वेषत्वम् । सन्निहिते दुःखहेतावहिकण्टकादौ अनुभूयमाने तज्जनिते दुःखे तत्साधने च द्वेष उत्पद्यते । कारणं च तस्य दुःखमेव दुःखं च यत्रातीतं तत्र तदर्थस्मरणात् प्रादुर्भवति यस्मिन्नुपलब्धे(१)ज्वलितमात्मानं मन्यते । स्वकीयोयं प्रत्यक्षः । परकीयश्च मुखवैकृत्यचक्षुरारुण्याद्यनुमेयः प्रयत्नधर्माधर्मस्मृतिहेतुः एवं हन्मीति प्रयत्नो द्वेषात् । वेदार्थविप्लवकारिषु द्वेषात् साक्षादेव धर्मः वैदिककर्मानुष्ठातरि विद्वेषादधर्मः द्वेषादनिष्टविषयानुस्मृतिश्च भवति स च बहुप्रभेदः द्रोहः क्रोधो मन्युरक्षमामर्ष ईर्ष्याभ्यसूया चेति भेदाः । अलक्षितविकारश्चिरानुबद्धोपकारकापकारपर्यवसानो द्वेषो द्रोहः । शरीरेन्द्रियादिवैकृत्यहेतुः प्रत्युत्पन्नदुःखप्रभवस्त्वाशुतरविनाशी क्रोधः । अपकर्तरि प्रत्यपकारासमर्थस्यान्तर्निगूढो द्वेषो मन्युः । परकीयगुणविद्वेषोक्षमा सैवासहिष्णुतेत्युच्यते । स्वगुणपरिभवशंकिनः परगुणविद्वे-

(१) यस्मिन्नुपपन्ने इति—पा० ३ पु० ।

त्वप्रतीतिः हस्तस्यैवावनमनेन तदनुमानात् । अन्यत्रापि गुरुत्वस्यावनमनोन्नेयत्वं तुलकेनोन्मीयमानस्य हिरण्यादेः। ननु यावदेवावयवानां गुरुत्वं तावदेवावयविन्यपि कथं स्यात् अवयवगुरुत्वापेक्षया तदाधिक्यप्रसङ्गात् । अवयविनि तदाधिक्यमस्त्येवेति चेत् । अवनमनविशेषोपलम्भप्रसङ्गादिति चेत् न अवनमनविशेषस्य तत्र सत्त्वात् । अनुपलम्भस्तु प्रस्तरादावुन्नीयमानेन्धनादिगुरुत्वानुप्रवेशात्तदुपपाद्यः नहि स्वल्पगुरुत्वकार्यमवनमनं स्फुटमुपलभ्यते । तच्चैतत् संयोगप्रयत्नसंस्काराविरोधि तैः प्रतिबद्धस्य स्वकार्यस्य पतनस्यानुत्पादकत्वमेव तद्विरोधः । तथाहि दोलारूढस्य संयोगेन प्रतिबन्धादपतनं विधारकप्रयत्नेन प्रतिबन्धाच्छरीरस्यापतनं वेगेन प्रतिबन्धात् प्रक्षिप्तशरादेरपतनं एतच्चावयविनि कारणगुणपूर्वकं परमाणौ नित्यम् ॥

अथ द्रवत्वं । तच्च द्विविधं सांसिद्धिकं नैमित्तिकं च । आद्यमप्स्वेव द्वितीयं पृथिवीतेजसोः । आद्यस्यावयविनि कारणत्वेन पूर्ववृत्तिता परमाणौ नित्यता । द्वितीयं तेजःसंयोगासमवायिकारणकत्वम् । तैलादौ कथं सांसिद्धिकं द्रवत्वमिति चेत् । न उपष्टम्भकपाथस्सक्तद्रवत्वोपलम्भात् ।

कथं तर्हि दहनानुकूलता स्नेहोत्कर्षात् जलान्तरे तु न तथा स्नेहोत्कर्ष इति विशेषात्। तत्र नैमित्तिकद्रवत्वोत्पत्तिप्रक्रिया पाकजरूपाद्युत्पत्तिप्रक्रियावत्। तद्यथा। वह्नेर्नोदनादभिघाताद्वा घृताद्यारम्भकपरमाणौ क्रिया ततः परमाण्वन्तराद्विभागः तत आरम्भकसंयोगनाशस्ततो द्व्यणुकनाशः ततः परमाणौ द्रवत्वान्तरोत्पत्तिस्ततस्तत्र पुनः कर्मणा विभागारम्भकसंयोगात् द्व्यणुकोत्पत्तिस्ततः कारणगुणक्रमेण द्रवत्वोत्पत्तिरिति। ननु हिमकरकादेरपि नैमित्तिकद्रवत्ववत्त्वात् पृथिवीत्वमेव किन्न स्यादिति चेत् न शीतस्पर्शवत्तया तदाप्यत्वानुमानात्। तर्हि तत्र काठिन्यं कथमिति चेत्। सांसिद्धिकद्रवत्वस्यैवादृष्टप्रतिबन्धात्। करका पृथिवी कठिनसंयोगवत्त्वादिति चेत् न अनुष्णाशीतस्पर्शवत्त्वस्यात्रोपाधित्वात्। साधनव्यापकत्वान्नायमुपाधिरिति चेत् न पक्षावृत्तिर्यत्र हेतुस्तत्र तादृशस्याप्युपाधित्वसम्भवात्। तर्हि स्वरूपासिद्धिरेवास्तु(१) न तु सोपाधित्वमिति चेत् न उपाधेः सर्वत्र दूषणान्तरसाङ्कर्यनियमात्। उपाधिलक्षणानाक्रान्तत्वान्नायमुपाधिः साध्यव्यापकत्वे सत्यपि साधनाव्यापकत्वविरहादिति

(१) स्वरूपासिद्धिरेवात्रेति-पा० ३ पु०।

चेत् न यद्व्यावृत्त्या पक्षे साध्यसाधनसम्बन्धो व्यावर्तते स धर्मस्तत्र हेतावुपाधिरिति तल्लक्षणात् । साध्यसाधनसम्बन्धव्यावृत्तिः प्रकृते द्वयोरपि व्यावृत्त्या यत्र तु पक्षवृत्तिर्हेतुस्तत्र साध्यमात्रव्यावृत्त्येत्यन्यदेतत् । हिमकरकादिविलयनमपि घृतादिविलयनवदेव ॥

अथ स्नेहः । रसवन्मात्रवृत्तिवृत्तिगन्धवद्वृत्त्यवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं स्नेहत्वम् । स चाम्मात्रविशेषगुणः । जलपरमाणौ नित्योऽन्यत्र कारणस्नेहपूर्वकः सङ्ग्रहमृजाहेतुः । सङ्ग्रहो हि सक्तुसिकतादीनां पिंडीभावप्रयोजकः संयोगविशेषः । मृजा चोद्वर्तनादिसाध्या शरीरशुद्धिः । घृतादौ पार्थिवे स्नेहः कथमिति चेत् । तत्रोपष्टम्भकं जलभागो स्नेहस्योपलम्भात् स्निग्धं घृतमिति प्रतीतिस्तु परम्परासम्बन्धात् । द्रवत्वमपि घृतादावप्याप्यमेव स्यादिति चेत् न तस्य नैमित्तिकत्वेन तद्विजातीयत्वात् ॥

अथ संस्कारः । मूर्तामूर्तवृत्तिवृत्तिकालवृत्त्यवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं संस्कारत्वम् । स चायं त्रिविधो वेगो भावना स्थितिस्थापकश्चेति । तत्र वेगो मूर्तेष्वेव पञ्चसु वर्तते कर्मासमवायिकारणकनोदनाभिघातजनितेन कर्मणा वेगजनना-

त् । स च वेगः पुनः कर्मान्तरमारभते अत एवोत्पादकसजातीयोत्पादकं च त्रयाणामनुगतं रूपं संस्कारत्वजात्यभिव्यञ्जकं कर्मणा जनितेन वेगेन कर्मजननात् । ज्ञानजनितेन संस्कारेण ज्ञानजननात् । कर्मजनितेन स्थितिस्थापकेन कर्मजननात् । न चैवं शब्दमादाय संस्कारत्वं स्यात् तत्राप्युत्पादकसजातीयोत्पादकत्वसत्त्वादिति वाच्यं । जातिसंकरापत्तेः । क्वचिदयं कारणगुणपूर्वकः । स्पर्शवद्द्रव्यसंयोगविनाश्यः प्रत्यक्षेण वेगेन गच्छतीति प्रतीतेः । ननु वेगस्य कथं तीव्रत्वमन्दत्वे तज्जनितस्य कर्मणः तज्जनकस्य वा तीव्रत्वमन्दत्वे तत्र गृह्येते इति चेत् न तत्रापि तदनुपपत्तेः । कर्मणा सर्वेषामुत्पन्नमात्राणामेव विभागजनकत्वेनाविशेषादिति चेत् । मैवं । युगपत् प्रक्षिप्तयोर्नाराचयोर्युगपत्पातः कर्मणो वेगस्य तीव्रत्वमन्दत्वे विना न स्यादिति तत्कल्पनात् । किंचित्कर्माल्पदेशावच्छेदेन संयोगं जनयति किंचिच्चाधिकदेशावच्छेनेति शरादिपातायौगपद्योपपत्तेः । तादृशं च कर्मवैचित्र्यं वेगाधीनमिति तद्गत एव तीव्रत्वमन्दत्वे । तत्र तीव्रो वेगः स्पर्शवद्द्रव्यसंयोगविशेषनाश्यो मन्दस्तु यत्किञ्चित्स्पर्शवद्द्रव्यसंयोगनाश्यः । स चायमेक एव

शरादौ यावत्पतन(१)मनुवर्तत इति वैशेषिकसिद्धान्तः। अन्येषां तु सन्तानरूपेणाप्युत्पद्यते कर्मणा वेगः पुनर्वेगेन कर्मेति मतं। 'नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरं चेति' पारमर्शं सूत्रमुभयत्र समानं यद्यपि तथापि स्पर्शवद्द्रव्यं संयोगविशेषविरोधीति विशेषपदमुपाददानस्य प्रशस्तदेवाचार्यस्य तथाभिप्रायोन्नयनात्। अन्यथोत्तरसंयोगविरोधीत्येव ब्रूयात्।

अथ भावना सा चात्मविशेषगुणः संस्कारः। दृष्टश्रुतानुभूतेषु अर्थेष्वनुभवेन जन्यते स्मृतिं प्रत्यभिज्ञानं(२) च जनयति क्वचिद्विरोधिज्ञाननिवर्त्यः। चैत्रमैत्रभ्रमाज्जनितस्ताद्रूप्येण संस्कारो नायं मैत्रः किन्तु चैत्र इति विरोधिन्या ज्ञानधारया निवर्त्यते। क्वचिच्च मदनिवर्त्यः सः मत्तानां पूर्वसंस्कारविलोपदर्शनात्। क्वचिच्च तीव्रदुःखनिवर्त्यः मरणदुःखेन रोगादिदुःखेन च तस्यादर्शनात्। पटुभ्यासादरप्रत्ययाधीनः। पटुप्रत्ययाद्धि दाक्षिणात्यानामुष्टदर्शनात्संस्कारो दृढतरः ?। अभ्यासाच्च विद्याशिल्पादौ। क्वचिदादरप्र-

---

(१) यावत्पातमिति-पा० २ पु०।

(२) प्रत्यभिज्ञाञ्चेति-पा० २ पु०।

लयात् । तथा देवहृदादौ सौवर्णराजतपद्मादिदर्शना-
त्संस्कारातिशयो जायते । सोयं स्थिरतरः सर्गान्तरज-
न्मान्तरस्थायी सदृशादृष्टचिन्तादिना उद्बुध्यते ।
उद्बुद्धश्च स्मृतिं प्रत्यभिज्ञाञ्च जनयति । अदृष्टाज-
न्मान्तरे संस्कारोद्बोधः । तथा च गौतमीयं सूत्रं पूर्वा-
भ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसंप्रतिपत्तेः ।
जीवनादृष्टादुद्बुद्धसंस्कारो बालको जातमात्रः स्त-
न्यपानमिष्टसाधनमित्यनुमिमानः स्तन्यपानादौ प्र-
वर्तते । नहि संस्कारोद्बोधमन्तरेण व्याप्तिस्मृतिरत्र न
च तामन्तरेणेष्टसाधनतानुमितिर्न च तामन्तरेण स्तन्य-
पानादौ प्रवृत्तिः । केचित्तु प्रत्यभिज्ञायां न संस्का-
रो जनकः किन्तु स्मृतिरिति मन्यन्ते तैस्तदानीं तत्-
स्मृतिकल्पनायां प्रमाणं वाच्यम् । संस्कारमात्रजन्य-
त्वेन प्रत्यभिज्ञायाः स्मृतित्वापत्तिरिति चेत् न
इन्द्रियसमवधानासमवधानाभ्यां विशेषात् । अन्यथा
संस्कारजन्यत्वेन स्मृतेरपि प्रत्यभिज्ञात्वापत्तेः । स्मृत्य-
र्थमेव संस्कारकल्पनेति चेत् न प्रत्यभिज्ञानार्थमेव
तत्कल्पना किं न स्यात्। तस्माद्विनिगमनाविरहादुभयत्र
संस्कारः पूर्वानुभवव्यापारः । यदेन्द्रियसन्निकर्षमपि
सहकारिणमासादयति तदा प्रत्यभिज्ञानमन्यत्र तु

स्मृतिं जनयतीति परमार्थः । स चायं क्वचित् प्रत्येकानुभवजनितोपि समूहालम्बना स्मृतिमुत्पादयति । तद्यथा घटमानयेत्यत्र प्रत्येकवर्णानुभवजनितसंस्कारैर्मिलित्वा पदभावावस्थितद्वित्रिचतुरादिवर्णालम्बनैका स्मृतिरनन्तरं प्रत्येकपदज्ञानाहितैः संस्कारैर्मिलित्वा वाक्यस्थानि सर्वाण्येव पदान्येकस्मृत्यारूढानि क्रियन्ते । ततो वाक्यार्थानुभवोऽन्यथा तदनुपपत्तेः । वर्णानुभवप्रकारस्तु शब्दे निवेदयिष्यते ।

स्थितिस्थापकस्तु स्पर्शवत्स्वेव द्रव्येषु वर्तते। घनतरावयवसन्निवेशविशिष्टेषु प्रतिनियतकार्यदर्शनादुन्नीयते न तु प्रत्यक्षः ताद्रूप्येण प्रत्यक्षानुदयात् । स्वाश्रयं त्वन्यथाभूतं नियमतः पूर्वावस्थां प्रापयन् अनुमीयते तद्यथा स्थावरजङ्गमविकारेषु धनुःशाखादन्तशृङ्गसूत्रवस्त्रादिषु लग्नसंवर्तितेषु तस्य नियतं कार्य्यं लक्ष्यते। बलान्नामितं धनुः पुनः पूर्वावस्थमेव दृश्यते(१)। बलान्नामिता शाखा पुनः स्वदेशमेव प्राप्नोति। ताम्बूलादि भक्षयतां दन्ता यत एव वियुक्तास्तत्रैव संयुज्यन्ते । एवं रोमन्थमभ्यस्यतां मृगादीनां शृङ्गं यत एव चलितं तत्रैव संवल्यते। एवञ्चायःसंवर्तितं सूत्रं पुनस्तथैव ऋजु भवति ।

(१) पूर्वावस्थां प्रापयद्घनामितमिव दृश्यत इति-पा० ३ पु० ।

वस्त्रं च भग्नं पुनः प्रकृतावस्थमेव जायते । एवमन्यदप्यूह्यम् । तदिदं प्रतिनियतकार्यमन्यथानुपपद्यमानं कर्मणः कारणविशेषमानयति । न च तद्वेगादिकमेव तस्य नियतक्रियाप्रतिबन्धजनकत्वात् । पूर्वावस्थानापादकत्वात् । नहि वेगेनोत्पादितं शरादिकर्म पुनस्तत्रैव शरमवस्थापयति तस्मात्समानाधिकरणमसमवायिकारणं तादृशस्य कर्मणो धनुःशाखादिगतस्यावश्यं कल्पनीयं । स एव संस्कारः स्थितिस्थापकाख्य इति सिद्धम् । स च परमाणुषु नित्यः कार्यद्रव्येषु कारणगुणपूर्वकः क्रियासन्तानविशेषासमवायिकारणश्चेति ।

अथ धर्मः । स्वर्गजनकस्मृत्यतीन्द्रियात्मविशेषगुणमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं धर्मत्वम् । तत्र विप्रतिपत्तिः प्रयत्नकारणात्मविशेषगुणनिरुपाधिविषयकारणात्मविशेषगुणत्वं मानसप्रत्यक्षविषयो वर्तते न वा । अत्र विधिकोटिरास्तिकानां निषेधकोटिर्नास्तिकानाम् । तत्र च वैचित्र्यान्यथानुपपत्त्या प्रतिपुरुषसमवेतश्चिरस्थायी विहितयागादिक्रियाजन्यः कालान्तरफलानुगुणो गुणविशेषोऽवश्याभ्युपगन्तव्यः स एव धर्मः । तत्र मानं देवदत्तस्याद्यं शरीरं देवदत्तविशेषगुणप्रेरितभूतपूर्वकं कार्यत्वे सति तद्भोगसाधनत्वात् तन्निर्मित-

स्रगादिवत् । न चायं भूतधर्म एव साधारण्यप्रसङ्गात् । नहि भूतधर्मा गन्धादयः कस्यचिदेव । न चैक एव सर्वपुरुषगामी साधारणविग्रहत्वप्रसङ्गात् । नहि साधारणस्यासाधारण्येन फलोपभोजकत्वं सम्भवति । न च नास्त्येवासौ किंतु यागादिरेव धर्मः । भवति हि यागाद्यनुष्ठिनवतां धार्मिकोयमिति धीः । तथा सति क्षणक्षयिणो यागादेश्चिरभाविफलं सुखादि न स्यात् । यागादौ धर्मव्यपदेशस्तर्हि कथं ? लक्षणयेति गृहाण । धर्मसाधनत्वाद्धि यागादयो धर्मपदव्यपदेशभाजः । यथा चन्दनादि सुखमिति सुखसाधनत्वात् चन्दनादौ तद्व्यपदेशः । अस्तु तर्हि यागादिसाध्या देवताप्रीतिरेव चिरभाविफलानुगुणो यागादिव्यापारः एवं सति शाब्दिकस्मृतिरप्युपपद्यते । यज देवपूजायामिति गौरवप्रीतिरूपक्रियायाः पूजात्वादिति चेत् । देवताप्रीतेरप्याशुविनाशित्वात् फलावसायिव्यापारत्वानुपपत्तेः । प्रीतिपरम्परास्त्विति चेत् । तदुत्पादकत्वे प्रमाणाभावात् । एकव्यापारापेक्षया परम्पराया एकरूपत्वाद । स्नानदानश्राद्धादौ देवताप्रीत्यभावाच्च । अस्तु तर्हि यागादिध्वंस एव व्यापारः स हि चिरस्थायी भवत्येकश्चेति चेत् न तस्यानन्तत्वेनानन्त-

फलप्रवाहापत्तेः । ध्वंसस्यानन्तत्वेपि विधिबलायातं वर्षभोग्यादिकमेव फलं भविष्यतीति चेत् न विधेः सर्वत्र तादृप्येणाश्रवणात् । न हि स्वर्गकामो यजेतेत्यादौ कालावच्छेदः श्रूयते । किञ्च यागध्वंसयोरेकत्र कार्ये कारणत्वाभावेन व्यापारव्यापारिभावानुपपत्तेः । कारणीभूताभावप्रतियोगित्वेन यागादेः प्रतिबन्धकत्वापत्तेः । अस्तु तर्हि क्रियैव यागादिका स्थायिनी किं व्यापारकल्पनया । इच्छाविशेषस्य यागदानादेः क्षणद्वयानन्तरमनुपलम्भनिबन्धन एव तन्नापूर्वव्यपदेशोपि । योग्यस्य तदानीमनुपलम्भ एव कथं स्यादिति चेत् न वस्तुस्वाभाव्यात् । आत्मविशेषगुणानामुत्पन्नमात्रवेद्यतया तदनन्तरमनुपलम्भसम्भवादिति चेत् । मैवं योग्यानुपलम्भेनैव तदभावावधारणात् । अन्यथा ध्वंसः क्वचिदपि न सिध्येत् । अनुपलम्भस्य वस्तुस्वभावालम्बनत्वेनैवोपपत्तेः । ननु भवत्वपूर्वं यागादिव्यापारः तथापि तत्कल्पनानुपपन्ना । यागादेरिष्टसाधनत्वं प्रतीयमानं व्यापारमन्तरेणापर्यवस्यद्व्यापारं कल्पयेत् परन्तु तदिष्टसाधनत्वप्रतीतिरेवायोग्यतया न सम्भवति । साक्षात्साधनत्वस्य बाधितत्वात् । परम्परासाधनत्वस्य च परम्पराघटकानुपस्थि-

तात्प्रतीतेः। तृतीयस्य प्रकारस्य चासम्भवात् इति चेत्। न साक्षात्परम्परौदास्येन साधनत्वमात्रेणैव प्रथमं लिङादिना तदुपस्थितेस्तदनन्तरं साक्षात्साधनत्वमपर्यवस्यत्तत्कल्पयेदिति विशेषात्। अयोग्यतया साधनत्वप्रतीतिरेव न स्यादिति चेत् न तदयोग्यतायां क्रमेणापि तदन्वयो न स्यात्। न स्याच्चानुभवस्य चिरभाविनीं स्मृतिं प्रति संस्कारव्यापारकल्पना। अत्रान्वयव्यतिरेकाभ्यां स्मृतिं प्रति कारणत्वं गृहीतमनुभवस्य व्यापारमन्तरेणानुपपद्यमानं कल्पयतीति चेत् न अपिशब्देन साधनत्वस्यावगमात्। न ह्यन्वयव्यतिरेकयोः शब्दात् बलवत्त्वं। शब्दो लिङादिः साधनत्वं ब्रूते परन्त्वपूर्वस्य न तु यागादेरयोग्यत्वेति चेत् न पूर्वानुपस्थितेपूर्वशक्तिग्रहानुपपत्तेः क्रियासमभिव्याहारात्। क्रियाया एव यागादेस्तदुपस्थाप्यसाधनत्वान्वयौचित्यात्। लौकिकलिङो पचेतेत्यादेः क्रियेष्टसाधनत्वाभिधायकत्वकल्पनात्। साधनत्वमात्रे चायोग्यता नास्त्येव येन क्रियापरिहारः स्यात्। नन्वपूर्वमपि यस्यापूर्वत्वेन पूर्वं नोपस्थितं तस्यापि कार्यत्वेन सामान्यत उपस्थितमेवेति सुग्रहस्तत्र समय इति चेत्। तर्हि कार्यत्वेन घटादिसाधारण्येन लिङादिशक्तिग्रहापत्तेः।

ननु नेदमनिष्टं परन्त्वन्विताभिधानदशायामयोग्यतया घटादिपरिहारेण लिङ्गादिपदात् कार्यत्वेनैव रूपेण पूर्वोपस्थितिरिति चेत्। न शक्तिग्रहकाले यथायोग्यतया क्रियानिरासस्तथा घटादिनिरासोपि किन्न स्यात्। न हि तद्योग्यं । घटादीनामानंत्यान्निरासो न शक्यते इति चेत् तर्ह्यन्विताभिधानकालेपि। तस्मात् क्रियागतमेव साधनत्वं लिङादिना बोधितमपर्यवसन्न सदपूर्वं कल्पयतीत्येव न्यायः। तदिदं कर्तृगतमित्योत्सर्गिकं। क्वचिदन्यथाप्युपपद्यते यथा पुत्रेष्टिपितृयज्ञादौ । अतएवाहुः शास्त्रे देशितं फलं अनुष्ठातरीत्युत्सर्ग इति । ननु नियम एवास्तु पुत्रेण कृतस्य गयाश्राद्धस्य फलमपूर्वं पुत्र एवास्तिवति चेत्। न व्यापारस्य फलसमानाधिकरणस्यैव कल्पनात्। साक्षात्तदुपपादकविषयत्वात् कल्पनायाः। तर्हि मुक्ते पितरि पुत्रेण कृतं श्राद्धं निष्फलमेव स्यात्। तथा च श्रौतास्साङ्गात्कर्मणः फलावश्यम्भावनियम इत्यपि भज्येतेति चेत् न मुक्तस्य पितुर्निर्दोषत्वेन पुत्रकृतस्य कर्मणः सांगत्वस्यैव भङ्गात्। अदृष्टोत्पत्तौ दोषस्याप्यङ्गत्वात्। ननु स्वर्गभागिपितृकत्वमेव श्राद्धादिफलं । तच्च पुत्रगतमेवातस्तत्रैवापूर्वमपीति न क्वचित् क्रियावैयधिकरण्यं फलस्या-

पूर्वस्य वेति चेत् न स्वर्गभागिपितृकत्वोपाधेरपेक्षया स्वर्गस्यैव लाघवेन फलत्वकल्पनात् । तच्च पितृगतमेवेति कर्तृगतता फलस्यौत्सर्गिकीति सिद्धम् । सिद्धश्च धर्म आत्मगुणश्चिरस्थायी प्रतिपुरुषनिष्ठः । स चायमन्त्यसुखसंविज्ञानविरोधी प्रातिस्विकचरमभोगनाश्यः । अवश्यमनेनोत्पत्तिसत्ताध्वंसप्रतियोगिना भवितव्यं तन्नास्य नाशको भोग एव । स च यद्येक एव स्यात्तदा तस्य ब्रह्मविष्णुलोकावच्छिन्नसुखभोग्यस्याद्यस्यैव नाशकत्वे तदुत्तरोत्तरभोगपरम्पराया अहेतुकत्वमापद्येत तथा च तावदयं धर्मोनुवर्तते यावदन्त्यो भोगः । सुखतत्साधनयोर्मोक्षस्य चायं हेतुः । विशुद्धाभिजनविजन्मा ब्रह्मक्षत्रियविशां श्रुतिस्मृतिविहितात् कर्मणः प्रतिनियतादुत्पद्यते । शूद्राणामपि तदुद्देशेन विहितात् कर्मणस्त्रैवर्णिकशुश्रूषादेरुत्पद्यते । आश्रमिणां च ब्रह्मचारिगृहस्थवानप्रस्थसंन्यासिनां स्वस्वाश्रमविहितात् कर्मण उत्पद्यते न तु विपरीतादपि । नन्वयं भोगैकनाश्यश्चेत्तदा प्रधानापूर्वानुत्पत्तावन्यापूर्वाणां फलाजनकानां कथं विनाश इति चेत् न तेषां तत्त्वज्ञाननाश्यत्वात् । ननु धर्मस्य कीर्तनेन कर्मनाशाजलगमनेन वा कथं नाशः गुणस्य

समानाधिकरणविरोधिगुणनाश्यत्वान्निमित्तनाश्यत्वाच्चेति चेत् । न तत्र नाशपदस्य भोगाजनकत्वमात्रपरत्वात्। नाशस्तु तत्रापि कर्मणां तत्त्वज्ञानादेव। यद्वा प्रायश्चित्तवत् कीर्तनादीनामपि नाशकत्वमेव श्रुतौ तथा प्रतिपादनात् । नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीत्यादीनामचीर्णप्रायश्चित्ताकीर्तनादिकर्मपरत्वात्। 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इति तु लक्षणया भोगनाश्यत्वमेवाह। अन्यथापि भस्मसादित्यस्य लाक्षणिकत्वमेवोपेयम् । तथा च तत्त्वज्ञानिनो योगर्द्धिवशादनियतविपाकानन्ततत्तत्कर्मराशेः कायव्यूहनिर्माणेन युगपन्नाश्यत्वमेव भोगेन भस्मसात्करणमिति सर्वं सुस्थम्।

अथाधर्मः। सोऽप्यात्मगुणः । दुःखजनकवृत्तिगत्यक्षात्मगुणावृत्तिगुणत्वव्याप्यजातिमत्त्वं तल्लक्षणम् । स चान्त्यदुःखसंविज्ञानविरोधी कुंभीपाकादिनरकप्रापकादधर्मात्तत्र दुःखपरम्परोत्पद्यते। चरमेण दुःखभोगेन स नाश्यते ·कीर्तनात् प्रायश्चित्ताच्च नश्यति । प्रायश्चित्ते प्रवृत्तिरेव न स्यात् यतस्तन्नाश्यपापजन्यदुःखस्य यदि प्रागभावोऽस्ति तदा तत्रावश्यंभावि दुःखमिति प्रायश्चित्तानुष्ठानवैयर्थ्यमथ दुःखप्रागभावो नास्ति तदा तत एव दुःखानुत्पत्तिरिति किं प्रायश्चित्तेनेति चेन् । अत्राहुः दुःखप्राग-

भावोऽस्त्येव किन्तु प्रायश्चित्तेन दुःखकारणप्रत्यवायविघटनद्वारा स एव परिपाल्यते । दृश्यते हि कण्टकादिदुःखस्योत्पादप्रतिबन्धस्तत्प्रतीहारात् । अन्यथा लोकेऽप्यहितनिवारणे प्रवृत्तिरनयैव शङ्कया न स्यात् । एवं सति प्रागभावस्य तत्त्वं व्याहन्येत । सर्वथा प्रतियोग्यनुत्पत्तौ तदत्यन्ताभावत्वापत्तेरिति चेत् न प्रतियोगिजनकाभावत्वेन तस्यात्यन्ताभावभेदात् । जननमन्तरेण जनकत्वमेव तस्य कथमिति चेत् न सहकारियोग्यताविरहादुपपत्तेः स्वरूपयोग्यस्य सहकारिसमवधाननियमाभावात् । नित्यस्य नियम एवेति चेत् न प्रागभावस्य नित्यत्वानुपपत्तेः । सहकारिविघटनाच्चिरस्थत्वमेव प्रकृते पर्यवसन्नमित्यन्यदेतत् । कथमेतादृशस्याभावस्य जनकत्वमवधारणीयमिति चेत् सावधारिकस्य गतिस्तावदेषा । दृश्यते हि सहकारिविरहात् स्वरूपयोग्यस्यापि दंडादेरजनकत्वम् । किञ्च प्रागभावसत्त्वासत्त्वविकल्पश्चेत्तदा पुरुषः कदाप्यापाकात् रक्तरूपानुत्पादार्थी कंचिद्घटं वह्निर्न निःसारयेत् रक्तरूपप्रागभावसत्त्वे तदुत्पत्तेरावश्यकत्वात् तदसत्त्वे तत एव रक्तरूपानुत्पत्तिरिति तन्निःसारणप्रयासवैयर्थ्यात् । तस्माददृष्टसत्त्वासत्त्वविकल्पवत् प्रागभावसत्त्वासत्त्वविकल्पोऽपि सकललोकव्यवहारप्रातिकूल्यमावहति ।

अन्येत्वाहुः अधिकारसम्पादनार्थं प्रायश्चित्ते प्रवृत्तिः प्रत्यवायपरिहारस्तवर्जनीयसिद्धः । तथाहि द्विविधं पातकमुपपातकं महापातकं च । तत्रोत्पन्नधर्मफलीभूतप्रतिबन्धकपापत्वमुपपातकत्वम् । धर्मोत्पत्तिप्रतिबन्धकपापत्वं महापातकत्वम् । तथाचेदं पापं नश्यतु धर्मफलं मयोपभुज्यतामित्यर्थितयोपपातके प्रायश्चित्ताचरणम् । इतःप्रभृति पुण्यमेव मे समुत्पद्यतां महापातकं नश्यत्विति कामनया महापातके प्रायश्चित्ताचरणं न तु दुःखानुत्पादार्थितया येन प्रागभावसत्वासत्त्वविकल्पः स्यात् । तर्हि दुःखं भविष्यत्येव चेत्तदा किं प्रायश्चित्तेनेति चेत् न प्रायश्चित्तेन्योद्देश्यतयानुष्ठिते प्रागभावसत्त्वे दुःखं स्याचदसत्त्वे तु न स्यादिति प्रायश्चित्तविधेः पुरुषस्य च तत्र प्रवृत्तौ न वैफल्यमिति। अन्ये त्वाहुः प्रायश्चित्तनाश्यपापजन्यदुःखप्रागभावसत्त्वेऽपि तद्बोधजनितपापनाशादुत्तरासमयलाभ एव प्रायश्चित्तफलं। स तु प्रागभावः पापान्तरमासाद्य दुःखं जनयत्येव। अत्रेदमालोचनीयं। यं प्रत्यवायमुद्दिश्य प्रायश्चित्तं क्रियते तत्प्रत्यवायजन्यदुःखप्रागभावसदसत्त्वविकल्पात् अत्रापि प्रायश्चित्ताचरणं सफलमेव। तत्प्रागभावसत्त्वे तेनापि प्रत्यवायविशेषेण दुःखं अवश्यमेव

जननीयं तदसत्त्वे किं तन्नाशार्थं प्रायश्चित्ताचरणेन। ननु प्रत्यवायविशेषानुगतो न दुःखप्रागभावः। किं तर्हि कलञ्जभक्षणादिजन्यप्रत्यवायत्वावच्छिन्नानां एक एव प्रागभावो दुःखजनकसहकारी। तत्र चैकतज्जातीयप्रत्यवायनाशेऽपि तज्जातीयं प्रत्यवायान्तरमासाद्य दुःखं जनयतीति चेत्तर्हि कृतगोवधेनानेकगोवधाचरणं निःशंकं क्रियेत सर्वेषां गोवधजन्यपापानामेकदुःखप्रागभावसहकारित्वादिति नायं पन्थाः। किन्तु हेतूच्छेदं पुरुषव्यापारादिति अनागतयोर्धर्माधर्मयोरनुत्पादाद्वर्तमानयोश्चोपभोगात् प्रत्यवायो न स्यादित्यस्वरसात् प्रागभावपरिपालनमेव शास्त्रार्थः। प्रागभावस्यापि कारणविघटनमुखेनोत्तरकालसम्बन्ध एव साध्यत्वं न तु प्रागसत इति विशेषणं तत्र गौरवात्। तदिमं हिंसानृतस्तेयपारुष्यादीनि वेदनिषिद्धानि कर्माणि दुष्टाभिसंधिसहकृतानि जनयन्ति। फलं चास्य दुःखमैहिकमामुष्मिकं च तिर्यग्योनिजन्म कुंभीपाकादिनरकानुभवनीयं च।

अथ शब्दः। तत्राकाशगुणत्वं शब्दत्वं श्रोत्रमात्रग्राह्यजातिमत्त्वं वा। स चायं द्विविधो वर्णात्मकोऽवर्णात्मकश्च। तत्र वर्णात्मकस्योत्पत्तिः स्मृत्यपेक्षादात्मनः सं-

योगाद्वर्णोच्चारणेच्छा तदनन्तरं कोष्ठस्थवायोः संयोगात् कर्म तेन कर्मणा ऊर्ध्वं गच्छन् वायुः कण्ठताल्वादीनभिहन्ति । ततः कण्ठवाय्वभिघातान्निमित्तात्कण्ठाकाशसंयोगात् असमवायिकारणात् अकारकवर्गहकारविसर्जनीयानां वर्णानां निष्पत्तिः । एवं वायुतालुसंयोगान्निमित्तात्ताल्वाकाशसंयोगादसमवायिकारणादिकारचवर्गयकारशकाराणां वर्णानां निष्पत्तिः । एवं वायुमूर्धसंयोगान्निमित्तान्मूर्धाकाशसंयोगादसमवायिकारणात् ऋकारटवर्गरेफषकाराणाम् । एवं वायुदन्तसंयोगान्निमित्ताद्दन्ताकाशसंयोगादसमवायिकारणात् लृकारतवर्गलकारसकाराणामुत्पत्तिः । एवं स्वरादीनामुत्पत्तिरूहनीया । अवर्णात्मकास्तु ध्वनिरूपाः शङ्खादिवायुसंयोगान्निमित्ताच्छङ्खाकाशसंयोगादसमवायिकारणादुत्पद्यन्ते । एवं भेर्यादिशब्दा अप्यूह्याः । एते संयोगजा एव । विभागजास्तु वंशादौ पाट्यमाने दलद्वयविभागान्निमित्ताद्दलाकाशविभागादसमवायिकारणादुत्पद्यन्ते । न चात्रापि दलाकाशसंयोगो वाय्वाकाशसंयोगो वाऽसमवायिकारणमस्तु किं विभागेनेति वाच्यम् तयोः पूर्वमपि सत्त्वाच्छब्दानुत्पत्तेर्विभागे सति च तदुत्पत्तेर्विभागस्यैवासमवायिकारणता कल्प्यते अ-

न्वयव्यतिरेकबलात् । आद्यात्रेत्र च शब्दौ संयोगविभागजौ तदुत्तरस्तु सन्तानजो शब्दासमवायिकारणक एवेति । भेर्याकाशसंयोगदलद्वयविभागे निवृत्तेपि दूरस्थेन शब्दश्रवणात् कार्यकार्थसमवायस्य च प्रत्यासत्तेः सत्त्वात्तदुत्तरशब्दसन्तानस्य शब्दासमवायिकारणत्वकल्पनात् । तथा च संयोगाद्विभागाद्वि आद्यः शब्दः । तत्परं तेन कदम्बगोलकन्यायेन दशशब्दा जन्यन्ते तैरप्यन्ये यावत्कर्णशष्कुल्यवच्छिन्नं नभोभागमासाद्य जायन्ते ते च गृह्यन्ते। न च सर्वत्र शब्दोत्पत्तिप्रसङ्गः संयोगविभागयोस्तदसमवायिकारणयोरव्याप्यवृत्तित्वात् विभुविशेषगुणानां चासमवायिकारणप्रादेशिकत्वेन प्रादेशिकत्वनियमात् सुखादिवत् । न च नभसः श्रोत्रत्वे तत्समवायाविशेषात् सर्वशब्दोपलम्भप्रसङ्गः । यस्य शब्दस्याधारता कर्णशष्कुलीसंयोगावच्छेदेन तस्यैव ग्रहणात् यस्य तदत्यन्ताभावावच्छेदेन तस्याग्रहणात् । तर्हि शब्दसन्ताननिवृत्तिः कथं शब्देन शब्दान्तरजननध्रौव्यादिति चेत् न कण्ठताल्वाद्यभिघातजनितकर्मणो वायोः शब्दनिमित्तकारणतामापन्नस्य यावद्वेगमभिप्रतिष्ठमानस्य क्वचिद्गतिप्रतिबन्धात् क्वचिद्विनाशाद्वा शब्दान्तरानुत्पत्तेः ।

शब्दसन्तानविनाशात्। कस्यचिदन्त्यस्य शब्दस्य शब्दा-न्तरजननं प्रति स्वरूपयोग्यताविरहाद्वा सहकारिणा-मलाभाद्वा । ननु कर्णशष्कुल्यवच्छेदेनोत्पन्नः शब्दो गृह्यते तदा तत्तद्दिग्देशव्यपदेशः स्यात् कथं भ-वति हि प्राच्योयं उदीच्योयं इति व्यवहार इति चेत् तत्तद्दिक्प्रभवशब्दसन्ताने वर्तमानस्य जातिविशेषस्य तत्तद्देशीयशंखादिप्रभवत्वानुमापकत्वात् । स जाति-विशेषो यद्यपि विशेष्य निर्वक्तुं न शक्यते तथापीक्षु-क्षीरगुडादिमाधुर्यवैजात्यवदनुभवसाक्षिक एव तत्त-द्दिङ्निमित्तप्रभवशब्दसन्तानजन्यः शब्दः श्रोत्रेपि तत्तद्दिगवच्छेदेनोत्पद्यते गृह्यते चेति दिग्देशव्यपदेश इति वार्तिककृतः । आहङ्कारिकं श्रोत्रेन्द्रियं प्राणाद्या-त्मकमेव तेन तत्रस्थ एव गृह्यते तेनैव दिग्देशव्य-पदेश इति संख्यासर्वशब्दोपलम्भप्रसङ्गो दुर्वारः । योग्य एव गृह्यत इति चेत् न योग्यताया इन्द्रियसन्निकर्ष-भिन्नाया अनिर्वचनात् । तथोत्पादः परिणामो वा क्षण-भङ्गनिरासादेव निरस्तः । ननु नित्या एव वर्णा अभि-व्यक्तिधर्माणस्तथा च संयोगविभागजत्वादिव्युत्पादनं बालकप्रतारणमिति चेत् न वर्णध्वंसस्य प्रत्यक्षत एव ग्रहणात् । भवति हि श्रुतपूर्वो गकारो नास्ति निवृत्तः

कोलाहल इति धीः । अधिकरणायोग्यतायां कथमियं स्यादिति चेत् अस्ति तावत्सा यदि न प्रत्यक्षतस्तदानुमानादपि भवन्ती शब्दानित्यतामेव गोचरयति । वस्तुतः संसर्गाभावग्रहे प्रतियोगियोग्यतामात्रं तन्त्रं नाधिकरणयोग्यतापि तदुपलम्भकसकलसमवधाने सत्यनुपलम्भस्यैवाभावग्राहकत्वात् प्रकृते च तस्य सत्त्वात् । तर्हि सङ्ग्रामभावो निरूप्यते नैकेन सतेति भज्येतेति चेत् । तत्राधिकरणमात्रस्य प्रयोजकत्वाभिधानात् । तज्ज्ञानं च स्मृत्यादिरूपं अधिकरणं च देशकालादिरूपं कथंचिद्रूपेणापादनीयम् न तु समवायिदेशोभिमतः अन्यथा भूतले घटभावोपि न निरूप्येत । ननु प्रत्यभिज्ञाबाधितमिदं प्रत्यक्षमनुमानं वा न शब्दानित्यतां गोचरयति भवति हि स एवायं गकारः सैवेयं गाथेति चेत् न तारोग कारो मन्दो गकार इति विरुद्धधर्मसंसर्गात् प्रत्यभिज्ञाया एव बाधितत्वात् अन्यथोत्पन्नपुनर्जातकदलीकाण्डे प्रत्यभिज्ञाबलादभेदः स्यात् । ननु स्वाभाविको विरोधी धर्मो भेदनियतो वा तारत्वमन्दत्वादयस्त्वौपाधिका इति चेत् न अन्यगततयाऽप्रतीयमानानां स्वाभाविकत्वनियमात् । अन्यथा शैत्यं जलधर्म औष्ण्यं तेजोधर्म इत्यपि स्मर्यमाणारोपः गकारगतत्वे बाध-

काभावात् । तस्माद्विरुद्धधर्मसंसर्गात् भिन्ना एव गकाराः । न च गत्वतारत्वयोः परापरभावानुपपत्तिः गत्वाद्व्याप्यतारत्वादीनां भेदात् । न च ताराकारानुगतप्रत्ययाभावः सङ्कोच्छने साक्षात्कारप्रतिबन्धकतावच्छेदकशब्दवृत्तिजातित्वेन तदनुगमात् । किं च शुकसारिकाप्रभवस्त्रीपुंसप्रभवगकारेषु वैलक्षण्यानुभवात् परस्परविजातीयगकारसिद्धिः । कथमन्यथा शुकादीनां तदुच्चारितगकारादनुमानम् । कथं तर्हि भेदप्रत्यये सत्यपि स एवायं गकार इत्यभेदप्रत्ययः यथा अभेदप्रत्यये सत्यपि श्रुतपूर्वो गकारो नास्तीति भेदप्रत्ययः अत एव पृच्छाम इति चेत् न अभेदप्रत्ययस्य जात्यभेदालम्बनत्वात् । तथा च सोयं गकार इति तज्जातीयोऽयमर्थः । कथमन्यथा शुकविनष्टेषु, शाल्यादिषु तानेव शालीनुपभुंक्ष्महे तानेव तित्तिरीनिति लौकिकोनुभवः । तस्मात् भेदाभेदप्रत्यययोरहमहमिकयोर्जायमानयोर्व्यक्तिजातिविषयतया व्यवस्थापनं इतरथा एकप्रत्ययो भवेत् न स्वसति तस्मिन् पर इति । एवं सत्यनुमानमप्युच्यते शब्दोऽनित्यः कृतकत्वात् यद्यत्कृतकं तदनित्यं यथा घटः । अनित्यत्वव्याप्यकृतकत्ववांश्चायं तस्मादनित्यः । कृतक-

त्वमन्यतरासिद्धमिति चेत् न इदानीमुत्पन्नः शब्द इति प्रतीतिबलात् तत्सिद्धेः । साध्याविशिष्टोयं हेतुरिति चेत् न प्रागभावप्रतियोगित्वस्य साध्यत्वादिति महान् विशेषः । ध्वंसे व्यभिचार इति चेत् समवेतत्वे सतीति विशेषणात् सत्तान्तर्भावेणैव चाकृतकत्वनिरुक्तेः । एवं जातिमत्त्वे सति प्रत्यक्षत्वात् अस्मदादिप्रत्यक्षविशेषगुणत्वात् प्रत्यक्षभूतगुणत्वादित्यादि । किञ्च प्रत्यभिज्ञाबलाद्यदि वर्णात्मकशब्दानां नित्यत्वं तदा सैवेयं गुर्जरीत्यादिप्रत्यभिज्ञाबलात् ध्वनयोपि नित्याः स्युः । तदेवं सिद्धे वर्णानामनित्यत्वे पुरुषविवक्षाधीनानुपूर्व्यादिविशिष्टानां वाक्यानां च सुतरामनित्यत्वमिति । वेदा अपि पौरुषेयाः वाक्यत्वादस्मदादिवाक्यवदिति । वर्णानुभवप्रक्रिया तु चैत्रेण घटपदोच्चारणे कृते प्रथमं घकारस्य सन्तानक्रमेण चैत्रकर्णशष्कुल्यवच्छेदेनोत्पादोऽथ तस्य घत्वनिर्विकल्पकमनन्तरं घकारान्तरे घत्वविशिष्टज्ञानमथ तत्संस्कारएव टकारोत्पत्तिरथ टत्वनिर्विकल्पकमथ तत्रैव टकारे टकारान्तरे वा टत्वविशिष्टज्ञानमथ संस्कारोऽथ संस्काराभ्यां घटरूपवर्णद्वयसमूहालम्बना स्मृतिः । सैव च पदज्ञानमित्याद्युक्तम् । तत्राद्यः शब्दः कार्येणैव ना-

श्यते मध्यमास्तु शब्दा उभयतः कार्येणैव वा । यत्र तु वर्णान्तरोत्पादशक्तिमत एव कस्यचिच्छब्दस्य निमित्तवाय्वादिसहकारिवैकल्यवशादनुत्पादकत्वम् तदा स शब्दः कारणेन नाश्यते नाशकान्तराभावात् । तदुक्तं न्यायवार्तिकटीकायाम् आद्यस्तु कार्येणैव मध्यमानां त्वनियम इति । यदि तु स्वरूपशक्तिरहितोऽतीन्द्रियः शब्दोऽन्ते भव इत्यन्त्य उच्यते तदा तस्य कारणेनैव नियमतो नाशो । मध्यमानामाद्यस्य च कार्येणैव नाशः । स चान्त्यः क्षणिक एव । सुन्दोपसुन्दन्यायादुपान्त्यान्त्ययोरन्योन्यनाशकत्वमिति दिक् ॥

इति महामहोपाध्यायमिश्रश्रीभवनाथात्मज—महामहोपाध्यायसन्मिश्रश्रीशङ्करकृतौ कणादरहस्ये गुणपदार्थः समाप्तः ॥

अथ कर्माणि । क्रियामात्रवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं कर्मत्वम् । विभागासमवायिकारणमात्रवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं वा संयोगासमवायिकारणमात्रवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं वा । तत्र च प्रत्यक्षमेव प्रमाणम् । चलतीति प्रत्यक्षस्य लौकिकपरीक्षकसाधारणत्वादनयैवानुगतमत्या कर्मत्वजातेरपि सिद्धेः । द्वीन्द्रियग्राह्यं चैतत् एकद्रव्यमाशुतरविनाशि द्रव्यमात्रवृत्ति निर्गुणम् गुरुत्वद्रवत्वप्रयत्नसंयोगकारणम् स्वजन्यसंयोगनाश्यम् संयोगविभागयोरनपेक्षकारणम् । कथमिदं समवायिकारणादेरप्यपेक्षणादिति चेत् न स्वोत्पत्त्यनन्तरोत्पत्तिकभावभूतानपेक्षत्वस्य तथात्वात् । न हि समवायिकारणादिकं कर्मानन्तरोत्पत्तिकं वा पूर्वसंयोगाभावलक्षणं संयोगकारणं भावभूतम् । असमवायिकारणमात्रवृत्तिसत्तासाक्षाद्व्याप्यजातिः कर्मत्वम् । स्वपराश्रयसमवेतकार्यारम्भकत्वम् कर्मणः । संयोगविभागयोश्च स्वपराश्रयत्वात् वेगस्य च यद्यपि स्वाश्रयमात्रसमवेतत्वं तथापि कार्यविशेषमादाय स्वपराश्रितकार्यजनकत्वं । कर्मणः समानजातीयं प्रत्यनारम्भकत्वं कुत इति चेत् कर्मोत्पादकसंयोगादीना-

मेवोत्तरकर्मजनकत्वं कर्मणोऽपि कर्मजनने सामर्थ्यकल्पनानवकाशात् । ननु कर्मवति कर्म कथं नोत्पद्यत इति चेत् न समाविष्टाभ्यां कर्मभ्यामेकस्यामेव दिशि संयोगविभागौ यदि जननीयौ तदैकेनोपपत्तौ द्वितीयकल्पनानवकाशात् । अथ द्वाभ्यामपि परस्परविरुद्धयोर्दिशोः संयोगविभागौ जननीयौ तदान्योन्यप्रतिरुद्धान्न युगपदेव तौ भविष्यत इति संयोगविभागयोरनपेक्षकारणं कर्मेति मन्तव्यम् । कर्मत्वसाक्षाद्व्याप्याश्च पञ्च जातयः उत्क्षेपणत्वमवक्षेपणत्वमाकुञ्चनत्वं प्रसारणत्वं गमनत्वं चेति परस्परासङ्कीर्णाः कार्यविशेषाभिव्यङ्ग्याः एता जातयः ऊर्ध्वं गच्छत्यधो गच्छत्याकुञ्चति प्रसरति गच्छतीति पञ्चानुगतप्रत्ययान् परस्परविलक्षणान् जनयन्ति । दृश्यते हि हस्तादिषु तत्सम्बद्धेषु मुसलादिषु चोर्ध्वमुत्क्षिप्यमाणेषु पूर्वदेशावच्छेदेन संयोगजनकत्वमधोदेशावच्छेदेन च विभागजनकत्वं प्रतीत्य हस्तमुत्क्षिपति मुसलमुत्क्षिपतीति प्रत्ययः । तत्रैव हस्ते मुसले चाधो नीयमानेऽधोदेशावच्छेदेन संयोगमूर्ध्वदेशावच्छेदेन विभागमुपलभ्य हस्तमवक्षिपति मुसलमवक्षिपतीति प्रत्ययः । एवं वस्त्रचर्मकम्बलादेर्बाह्यद्रव्यस्यावयवानामन्योन्या-

भिमुख्येनाकाशादिदेशे संयोगं वस्त्रायनवच्छिन्नाकाशादिदेशाच्च विभागमुपलभ्य वस्त्रं सङ्कुचति चर्म सङ्कुचतीति प्रत्ययः। एवं तत्रैव वस्त्रादिषु पूर्वसंयोगविभागवैपरीत्येन संयोगविभागावुपलभ्य वस्त्रं प्रसरति चर्म प्रसरतीति प्रत्ययः। एवं यत्र नियतदिग्देशसंयोगविभागौ नोपलभ्येते मनुजविहङ्गसरीसृपादयविष्वनियतदिग्देशसंयोगविभागवत्सु तत्र गच्छतीति प्रत्ययस्स च प्रत्येतव्यवैलक्षण्याधीन इति प्रत्येतव्यवैलक्षण्यमपि सिद्ध्यति॥

नन सर्वत्र गच्छतीति प्रत्ययानुवृत्तेः कथं पञ्चत्वमिति चेत् न गमनशब्दस्य सामान्यविशेषोभयपरतया लौकिकैः प्रयुज्यमानत्वाच्चटकशब्दवत् यथा लौकिका विहङ्गमात्रे कलविङ्के च चटकशब्दमप्यविशिष्य प्रयुञ्जते एवं गमनशब्दमपि। परन्तु संयोगविशेषजनककर्मविशेषवर्गानुगतोत्क्षिपतीत्यादिप्रत्ययबलादायातो जातिविशेषो दुरपह्नवः गोत्वरसे गवाकारानुगमोऽश्वत्वरसेऽश्वाकारानुगमश्च यथा जातिभेदव्यवस्थापकः। किञ्च नियतार्थद्योतकानुपूर्वापूर्वादेः उपसर्गादपि भेदप्रत्ययः सिद्धः। किञ्च प्रतिनियतदिग्देशविशिष्टसंयोगविभागलक्षणकार्यजनकत्वमपि प्रतिनियतजात्य-

वच्छेदेनैव स्यादिति सिद्धं पञ्चैव कर्माणीति ॥

यद्वा गमनत्वं परसामान्यं कर्ममात्रे भाक्तः प्रयोगः । ननूत्क्षेपणादिवत् भ्रमणरेचननिष्क्रमणप्रवेशनपतनादयोऽपि सन्तु कर्मत्वावान्तरजातीया इति चेत् न तथा सति जातिसङ्करप्रसङ्गात् । तथाहि अपवरकादपवरकान्तरं गच्छन्तीं कामिनीमुपलभमानयोः कामुकयोरेकस्मिन्नेव कर्मणि प्रविशति निष्क्रामतीति प्रत्ययौ दृष्टौ तत्र कथं विरुद्धे द्वे जाती वर्तेताम् । एवं प्रविशति विहङ्गमादौ प्रविशति भ्रमतीति प्रत्ययौ कथं स्यातां तस्मात् तेषु भ्रमणादिषु वैजात्यमन्तरेणैव संयोगविभागयोर्विशेषमुपलभमानयोरेव विलक्षणा प्रतीतिर्न तु जातिभेदमपि सा विषयीकरोति । तर्हि विरोधाज्जातिभेदो मास्तु कथमेकस्मिन्नेव धर्मिणि युगपत् कर्मद्वयं स्याद्येन द्वयोर्द्रष्ट्रोः प्रतीतिभेदः स्यादिति चेत् न अवयवावयविकर्मभेदेन द्रष्ट्रोः प्रतीतिभेदोपपत्तेः । तच्च कर्म बहुविधं बहुकारणकं च । तत्र कस्यचित् प्रयत्नो निमित्तकारणं प्रयत्नवदात्मसंयोगश्चासमवायिकारणं यथा शरीरे तदवयवेषु वा गच्छामीतीच्छया शरीरचालनानुकूलः प्रयत्नो जायते ततः

प्रयत्नवदात्मशरीरसंयोगाच्छरीरकर्म । एवं हस्तमूर्ध्व-मुत्क्षिपाम्यधो वा क्षिपामीतीच्छायां तदनुरूपे प्रयत्ने उत्पन्ने प्रयत्नवदात्महस्तसंयोगादसमवायिकारणाद्धस्तयोरुत्क्षेपणमवक्षेपणं वा जायते । एवं प्राणापानादिषु जीवनयोनिप्रयत्नवदात्मवायुसंयोगात् कर्माणि जायन्ते । तस्य प्रयत्नस्य चेच्छापूर्वकत्वं क्वचित् यदीच्छापूर्वक एव प्रयत्नो नाडीगोचरः प्राणादिनोदनं जनयति तत्र प्रयत्ने सापेक्षादेव नोदनात् कर्म जायते । एवं हस्तवर्तिमुसलतोमरादिष्वपि कर्म प्रयत्नसहकृताद्धस्तादिनोदनादेव जायते तत् कर्म चेष्टा न भवति शरीरतदवयवकर्मण एव चेष्टात्वात् । प्रयत्नवदात्मसंयोगासमवायिकारणाक्रियात्वस्य स्वासमवेतस्वातिरिक्तस्पर्शवदजन्यक्रियात्वस्य वा तल्लक्षणत्वात् । प्रयत्नं विनापि महाभूतेषु नोदनाभिघाताभ्यां प्रत्येकं कर्म भवति । तत्र नोदनं गुरुत्वद्रवत्ववेगवान् समस्तान् व्यस्तान् वा अपेक्षमाणो यः संयोगविशेषः परस्परं नुद्यनोदकयोरविभक्तयोस्तस्मात् कर्म जायते यथा पङ्काख्यायां पृथिव्यां च नोदनाद्भूयसि भागे । स्पर्शवद्वेगवद्द्रव्यसंयोगः शब्दासमवायिकारणमभिघातस्तस्मादपि म-

द्याभूतेषु कर्म भवति पाषाणादिषु । एवं नोदना-
भिघातौ विनापि संयुक्तसंयोगान्नोदनाभिघातपूर्वका-
दपि कर्म ये प्रदेशाः साक्षान्न नुद्यन्ते नाभिहन्यन्ते
वा तेषु । पृथिव्यामुदकेषु च गुरुत्वादपि पत-
नमाद्यं फलादिषु द्वितीयादिकर्मसन्तानस्तु तत्रापि
गुरुत्वसंस्कारा॰भ्या....... संयोग' । एवं जलबिन्दुकरक-
योरप्याद्यं कर्म केवलादगुरुत्वात् सन्तानस्तु कर्मणो
गुरुत्ववेगाभ्याम् । कथमेतदिति चेत् न द्वयोर्गृहीत-
सामर्थ्ययोः सम्भूयकारितायामविवादात । कर्मणा च
तत्र संस्कारस्यावश्यजननात् संस्कारस्य च घन-
तरमूर्तद्रव्यसंयोगपर्यन्तमनुवर्तमानत्वात् । क्वचिन्मूर्तद्र-
व्यसंयोगेनापि तीव्रः संस्कारो न नश्यति यथा
करकाकन्दुकादावुत्पन्नः संस्कारो भूमिपतितस्या-
प्युत्पतनं निपतनमप्राकृत् करोति शरादि वा ब-
लवता पुरुषेण क्षिप्तं कुड्यादि भित्त्वा याति । क्व-
चित् द्रवत्वादपि कर्मोत्पद्यते यथा स्रोतोभूता-
नामपां स्थलप्रदेशान्निम्न्यभिस्रवणम् । तदेव हि स्य-
न्दनम् यथा सेतुप्रतिरुद्धेष्वप्सु सेतुभेदे सत्याद्यं
कर्म तदुत्तरकर्मसन्तानस्तु द्रवत्वतीव्रसंस्काराभ्याम् ।
तत्र चापां विशरारुतया यत्किञ्चित्संयोगाद द्र-

वत्वाच्चावयवकर्मोत्पत्तिरथावयवानामारम्भकसंयोगनाशो-ऽथ जलावयविनो विनाशस्तदनन्तरं परमाणुषु द्रव्या-रम्भकाः संयोगास्तैश्च द्व्यणुकादिक्रमेण दीर्घो ज-लावयवी स्रोतोरूपो जायते । तत्र च कारणगुणपूर्व-कमेव द्रवत्वमुत्पद्यते न च पुनः कर्मसन्तानः । एवमेव घृततैलक्षीरादौ वायुकर्मक्रम उन्नेयः। संस्कारादपि शरादौ कर्म संस्कारश्च वेगाख्यः क्वचित्तीव्रोऽतीव्रश्च । क्व-चित् कर्मणोऽसमवायिकारणं भवति । संस्कारादेव कु-लालचक्रादौ यः कर्मसन्तानः स तत्र भ्रमणादिसञ्ज्ञां लभते । एवं जन्ममरणयोः शरीरान्तर्भावो बहिर्भाव-श्च मनसः प्रयत्नं विनैवादृष्टवदात्मसंयोगजात् कर्म-णः । एवं वायोस्तिर्यग्गमनं वह्नेश्चोर्ध्वज्वलनमपकारो-पकारहेतुभूतं धर्माधर्माभ्यां तद्वदात्मसंयोगादेवोत्प-द्यते । यत्र च गुरुत्वप्रयत्नद्रवत्वनोदनाभिघातादिकम-न्तरेणाभिध्यानात् विषशकलचलनं मणीनां चाकृष्टा-कृष्टानां तस्करोपसर्पणमयस्कान्तादिमणीनामयःप्रभृत्युप-सर्पणं तत् सर्वमदृष्टान्निमित्तादात्मसंयोगादसमवायिका-रणादुत्पद्यते सर्गाद्यकालीनपरमाणुक्रियाप्येवमेवमिति ॥

इति महामहोपाध्यायसन्मिश्रश्रीभवनाथात्मज—महाम-होपाध्यायश्रीशङ्करकृतौ कणादरहस्ये कर्मपदार्थः समाप्तः ॥

अथ सामान्यम् । तच्च नित्यं सदनेकवृत्ति । अनुवृत्तप्रत्ययासाधारणकारणं वा अनुवृत्तिप्रत्ययासाधारणकारणवृत्तिपदार्थविभाजकोपाधिमत्त्वं वा द्रव्यवृत्तिगुणवृत्तिवृत्तिपदार्थविभाजकोपाधिमत्त्वं वा कर्मवृत्तिवृत्तिगुणवृत्तिवृत्तिपदार्थविभाजकोपाधिमत्त्वं वा । किमत्र प्रमाणमिति चेत् प्रत्यक्षेषु प्रत्यक्षमेव अतीन्द्रियेषु मनस्त्वप्रभृतिषु कारणतावच्छेदकत्वात् कार्यतावच्छेदकत्वाद्वा तत्सिद्धिः । न हि कार्यता कारणता वा धर्मविशेषावच्छेदमन्तरेण ग्रहीतुं शक्यते आकस्मिकत्वप्रसङ्गात् । तस्मादनुगतप्रत्ययः कार्यतावच्छेदकः कारणतावच्छेदको वा येन धर्मेण क्रियते बाधकं विना सैव जातिः । जातौ तु बाधकानि ।

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।

रूपहानिरसम्बन्धो वेति ।

न ह्याकाशत्वं जातिरेकव्यक्तिकत्वात् । तर्हि तत्र विशिष्टप्रतीतिः कथमिति चेत् शब्दाश्रयत्वमात्रात् । शाब्दी प्रतीतिस्तत्र कथं शब्दाश्रयत्वस्य तत्रानुपस्थितेरिति चेत् अबोध्यस्यापि दृढतरसंस्कारवशात् । गवादावप्येवमेवास्तु किं तत्रापि जातेर्बाध्यत्वाङ्गीका-

रेणेति चेत् तत्र बहूनां गवामेकमवच्छेदकमन्तरेणानु-
पस्थितेस्तदन्तर्भावेणैव सङ्केतकल्पनात् इह तु न तथे-
ति विशेषात्। यद्वा आकाशपदं निर्विकल्पमेव । तु
ल्यमपि सामान्यं न जातिः यथा घटत्वकलशत्वा-
दि न हि घटत्वकलशत्वयोस्तुल्यव्यक्तिकयोर्भेदे प्र-
माणमस्ति आक्षेपप्रतिक्षेपकत्वाभ्यां हि सामान्ये भि-
द्येते यथा वृक्षत्वशिंशपात्वे वृक्षत्वेन हि पनसा-
द्याक्षिप्तं शिंशपात्वेन प्रतिक्षिप्यते । परस्पराक्षिप्तप्रति-
क्षेपकत्वं वा यथा गोत्वाश्वत्वयोः गोत्वेनाक्षिप्ताः
शाबलादयोऽश्वत्वेनाक्षिप्ता आजानेयादयो गोत्वेन प्र-
तिक्षिप्यन्ते न चैवं घटत्वकलशत्वयोर्बुद्धित्वज्ञानत्व-
योर्वा सामान्यविशेषभावः परस्परविरोधो वा ।
सङ्करस्तु भूतत्वमूर्तत्वयोस्तयोः परस्परात्यन्ताभाव-
सामानाधिकरण्ये सति सामानाधिकरण्यात्। भूतत्वं हि
मूर्तत्वपरिहारेण नभसि मूर्तत्वं च भूतत्वपरिहारेण
मनसि वर्तमानं सङ्कीर्णमेव । अस्तु तर्ह्येकतरगन-
योर्जातिरिति चेत् न विनिगमनाविरहात्। उपाधित्वे-
ऽपि साङ्कर्यदोषस्तदवस्थ एवेति चेत् न अवच्छि-
न्नपरिमाणं हि मूर्तिः बहिरिन्द्रियग्राह्यविशेषगुणसम्ब-
न्धो भूतत्वम् तच्च नानाभूतमेव कथञ्चिदनुगमा-

नुरोधादभूतत्वमूर्तत्वाभ्यामभिलप्यते न त्वेकमेव सर्व-
साधारणं तत्सामान्यमिति । उभयोर्जातित्वेऽन्यत्रापि
गोत्वाश्वत्वयोः समावेशप्रसङ्गे गवाश्वाकारकराम्बितका-
र्योपलम्भः स्यात् । अत एव गुणगतजातावपि सङ्करो
दोष एव । अनवस्थानादपि सामान्यं नाङ्गीक्रियते यथा
सत्प्रत्ययानुरोधात् सत्तायामपि सत्तान्तरं जातिष्वेव
वानेकव्यक्तिवृत्तित्वेन सामान्येषु सामान्यान्तरमिति ।
विशेषेषु च विशेषत्वाकारेणानुगमेपि तत्र जात्यभ्यु-
पगमे *सामान्यवान् गुणो गुण इति गुणलक्षणाक्रान्ते-*
र्विशेषाणां गुणत्वापत्तौ स्वरूपमेव हीयते गुणपदार्था-
न्तर्भावात् । समवाये च रूपसमवाययोरसमवा-
य इत्यवच्छेदभेदेन भिन्नतया व्यवह्रियमाणे समवायत्व-
सामान्यं नास्ति जातेः समवायेनैव सम्बन्धेन वृत्त्य-
भ्युपगमात् समवाये च समवायाभावात् । तस्माद-
सम्बन्धादेव नात्र सामान्यम् । यद्यपि व्यक्तेरप्यभेदो-
ऽत्रास्ति तथापि स्फुटत्वात् सम्बन्धाभाव एवात्र
बाधकत्वेनाभिमत इति । अतद्व्यावृत्तिरेव सामान्यं
तच्चालीकं विकल्पमात्रगोचरो भवति हि गौरय-
मित्यस्य विकल्पस्यागोव्यावृत्तोऽयमिति विषय इति
चेत् न विधिरूपतया भासमानस्य गोत्वादेर्निषेधरूपत्वे

प्रमाणाभावात् । तदुक्तम् "न ह्यनुभवोऽपि व्याख्याय कल्प्यते" भवति हि गौरयमित्यनुवृत्तप्रत्ययस्यानुगतो विधिरूपो धर्मो विषयस्तस्य निषेधविषयताकल्पनमनुपपन्नमेव । अपि चेदमलीकमगोव्यावृत्तिरूपं वा तद्धर्मो वा ? नाद्यः अगोव्यावृत्तिरूपस्यासिद्धे गवि ग्रहीतुमशक्यत्वात् । गोत्वं सामान्यमन्तरेणागोत्वस्य सकलगोप्रतियोगिकान्योन्याभावस्य ग्रहीतुमशक्यत्वात् । शक्यत्वे वा शबलस्य गोरेव स्यात् व्यक्त्यन्तरभेदस्य तत्रापि सत्त्वात् । अगौश्च गोनिषेधात्मेति दुरुत्तरमितरेतराश्रयत्वम् । नापि द्वितीयः तद्धर्मस्य गोत्वस्यैव स्वीकारात् । सति च तद्धर्मे विधिरूपेऽलीककल्पनानवकाशात् । न चालीकस्य प्रतिभासनमपि सम्भवति इन्द्रियलिङ्गं शब्दानां सन्निकर्षाविनाभावसङ्केतबलप्रवृत्तीनामलीकागोचरत्वात् । तदाभासानामपि प्रमापूर्वकत्वनियमात् । वासनाबलात् तज्ज्ञानमिति चेत् न केवलाया वासनायास्तत्र प्रयोजकत्वे गोविकल्पस्य सर्वदोत्पत्तिप्रसङ्गात् । इन्द्रियादिसापेक्षत्वे त्वनुपपत्तेरुक्तत्वात् । तस्माद् गोत्वादिकं विधिरूपं सामान्यं निर्विकल्पकसविकल्पकवेद्यमपह्नोतुमशक्यमिति सिद्धं सामान्यम् ।

ननूत्पन्ने गोपिण्डे कथं गोत्वविशिष्टप्रतिपत्तिः । न तावत् तत्रैव गोत्वमुत्पन्नं नित्यत्वाभ्युपगमात् । नाप्यन्यतस्तद्गतम् अद्रव्यत्वेन क्रियानुपपत्तेः । नापि तत्रैवासीत् तस्य देशस्यापि गोत्वप्रसङ्गात् । यत्र चैकस्यां व्यक्तौ तद्वर्तते तत्र कात्स्न्र्येन तद्वृत्तावन्यत्र गवि गोत्वव्यवहारानुपपत्तिः । एकदेशाभावाच्चैकदेशेन वृत्त्यनुपपत्तेः । तदुक्तम् ।

न याति न च तत्रासीन्न चोत्पन्नं न चांशवत् ।
जहाति पूर्वपिंडं नेत्यहो व्यसनसन्ततिः ॥

इति चेत् न तत्रावस्थितमेव गोत्वमुत्पन्नायां गवि सम्बध्यत इत्यभ्युपगमात् । तत्तद्देशानामपि गोत्वप्रसङ्ग इति चेत् न तत्रासमवायात् । विभूनां सर्वगतत्वेऽपि परस्परमसम्बन्धो यथा तथा सामान्यमपि स्वव्यञ्जकैः पिण्डैरभिव्यज्यमानं सर्वगतमपि सर्वासमवेतम् ।

तदिदं सामान्यं द्विविधम् । परमपरं च । परं व्यापकमपरं व्याप्यम् । तत्र परं सत्ता तद्धि सामान्यमेव न तु कुतो विशेषोऽपि । तस्याश्च साक्षाद्व्याप्यानि द्रव्यत्वगुणत्वकर्मत्वानि परम्पराव्याप्यानि तु पृथिवीत्वरूपत्वोत्क्षेपणत्वादीनि । तद्भिन्नतद्व्याप्याव्या-

प्यत्वे सति तद्व्याप्यत्वं तत्साक्षाद्व्याप्यत्वं । तच्चा-
भेदेऽपि सत्त्वैव न जातिः किं तु स्वरूपसत्त्वमेव त-
द्व्यवहारनिमित्तमिति चेत् न उपेतत्वात् सत् सदि-
ति प्रत्ययस्य द्रव्यादित्रिकेनुगतत्वात् । तर्हि सा-
मान्यादौ सत्प्रत्ययः कथमिति चेत् सत्तासम्बन्धा-
देव परन्तु न समवायात् किन्तु सत्त्वैकार्थसम-
वायादेरत एव नाभावे सत्प्रत्ययः । तर्हि संस्था-
नमात्रे व्यङ्ग्यैव जातिरङ्गीक्रियतां घटत्वादिका न
त्वन्येति चेत् न अनुगतप्रतीतेरविशेषात् । तर्हि तद-
भिव्यक्तिनियमः कथमिति चेत् क्वचिन्नियताद्-
गुणात् यथा पृथिवीत्वादेर्गन्धस्नेहादिना । क्वचिन्नि-
यतात्कार्यत्वात् यथा रूपादिसाक्षात्कारादेश्चक्षुरत्वा-
दीनां । क्वचिन्नियतात्कारणत्वात् यथान्यतरकर्मा-
देः संयोगविशेषवृत्तिसामान्यादीनाम् । क्वचिन्नियता-
दवच्छेदकभेदात् यथार्थप्रवणत्वादेर्ज्ञानत्वादीनाम् ।
गुणगतजातिस्वीकारे किं बीजमिति चेत् बाधकवि-
नाकृतोनुगतप्रत्यय एव । ननु राजतसौवर्णमार्दघटेषु
घटाकारानुगतप्रत्ययात् घटत्वं च जातिः स्यात् तदा
रजतत्वादिना साङ्कर्यं स्यादिति चेत् न रजतत्वादिव्या-
प्यनानाघटत्वस्वीकारात् । घटशब्दस्तर्हि नानार्थः स्या-

दिति चेत् कः सन्देहो गोशब्दवत् तदुपपत्तेः । संस्थानविशेषे रजतादिसाधारणे घटत्वं स्वीक्रियतां तत एवानुगतप्रतीतिरुपपत्तौ किं द्रव्यत्वघटत्वजात्येति चेत् न संस्थानेऽप्यवयवसंयोगविशेषेऽन्यतरकर्मजत्वादिना परापरभावानुपपत्तेर्घटो द्रव्यमिति द्रव्यत्वसामानाधिकरण्येनानुभवाच्च । ननु समानसंवित्तिसंवेद्यतया व्यक्तेरभिन्ना जातिरस्तु । तथाहि गोत्वं गवाभिन्नं गवाविषयप्रतीत्यविषयत्वात् गोवदिति चेत् न पिण्डानां बहुत्वेन गोत्वस्य चैकत्वेन प्रत्ययात् । न हि चित्रकपिशकपोतिकादिषु भिन्नेन भासमानासु गोषु गोत्वमभिन्नं न भासते पूर्वपिण्डाग्रहेऽपि गोत्वस्य ग्रहात् गोत्वाग्रहेऽपि दूरे पिण्डमात्रस्य ग्रहात् । कथमन्यथा दूरे गौरयमश्वो वेति संशयः विशेषदर्शने संशयानवकाशात् । तस्माद्गवादिविषयप्रतीत्यविषयत्वं तुल्योपलम्भसामग्रीकत्वादन्यथासिद्धम् जातिपदात् केवलाया अपि जातेर्भानात् स्वरूपासिद्धं वा । तदेतत्सामान्यं व्यक्तौ गृह्यमाणायां गृह्यते । क्वचित् ब्राह्मणत्वपद्मरागत्वादीनामुपदेशसहकृतेन्द्रियग्राह्यता । क्वचिच्च तारतारतरत्वादावत्रधिनिरूप्यताप्युत्कर्षनिरूपत्वात् । द्रव्यत्वसाक्षाद्व्याप्यभिन्ना द्रव्यत्वव्याप्य-

जातिः परमाणुषु न वर्तते । अन्यथा दधित्वदुग्धत्वादेः परमाणुजातेश्चोपादानगतत्वेन तत्परमाण्वारब्धं घटादिकमपि दध्याद्यात्मकमापद्येत । ननु यथोपादानगतमपि तन्त्वादि(१) न पटादौ तथा परमाणुगतमपि दधित्वादि तदुपादेये न स्यादिति चेत् तर्हि द्व्यणुकादावपि न स्यात् । किमत्र विनिगमकं यत् तन्त्वादिकं न पटादिवृत्ति । परमाणुगतत्वेन क्षीरत्वादीनामुपादेयवृत्तितावश्यकतेति चेत् उपादानोपादेयगतजातित्वमेव क्षीरत्वादीनामुभयत्रोपलम्भात् तन्त्वादीनां च तन्त्वादिष्वेवोपलम्भात् ॥

इति महामहोपाध्यायसन्मिश्रश्रीशङ्करकृतौ कणादरहस्ये सामान्यपदार्थः ॥

---

(१) तन्त्वादीति सर्वत्राग्रे पाठान्तरम् ।

अथ विशेषाः । नित्यमात्रवृत्तिवृत्तिपदार्थवि-भाजकोपाधिमत्त्वं विशेषत्वम् । एकसमवेतमात्रवृ-त्तिपदार्थविभाजकोपाधिमत्त्वं वा समवेनातीन्द्रियमात्र-वृत्तिपदार्थविभाजकोपाधिमत्त्वं वा । तदुक्तं नित्यद्रव्य-वृत्तयो ह्यन्त्या विशेषा इति । नित्येष्वेव वर्तन्त एव ये ते विशेषाः अन्ते अवसाने भवा अन्त्याः येभ्यः परे विशेषा न सन्तीत्यर्थः । तत्र प्रमाणम् योगिनां तावत् परमाणुषु विभुद्रव्येषु च व्यावृत्तप्रतीतिरस्ति । त एवामी परमाणवो ये क्षीरमारब्धवन्त इति प्रत्य-भिज्ञानं चास्ति तदुभयं व्यावर्तकं नरश्यागो ? न चा-व्यावृत्तानामेवारम्भकसंयोगाधारता न च तामन्तरेण द्रव्यारम्भकता न च तामन्तरेण पुनर्घटशरावोदञ्चना-दिनिष्पत्तिर्निष्पन्नेषु च तेषु गन्धरसरूपस्पर्शविशेषो गुणान्तरकर्मसामान्याद्यविशेषः । भवन्तु गुणविशेषा एव तथेति चेत् न चतुर्विंशतेरन्येषां तेषामनुपलम्भबा-धितत्वात् । विशेषत्वेनाभिमता एव ते गुणाः सन्त्विति चेत् न तेषामनित्यत्वे तत्पूर्वं परमाणूनामभेदापत्तेः । नित्यत्वे तु सञ्ज्ञाभेदमात्रं । गुणात् कथं भिद्यतामि-ति चेत् न तस्यानुपलम्भबाधितत्वात् । विशेषाकारानु-गतप्रत्ययोऽपि कथमिति चेत् निरुक्तोपाधेरेव । स

एवोपाधिः कथं न सामान्यं जातिरूपमिति चेत् रूप-हानेर्जातिबाधकस्योक्तत्वात् । सामान्यवतो हि द्रव्य-समवेतस्याद्रव्यगुणत्वकर्मत्वान्यतरप्रसङ्गेन विशेषत्व-हानिरेव स्यात् । गुणभेदसिद्धौ रूपहानिशङ्का स एवा-द्यापि न सिद्ध इति चेत् न अनित्यावृत्तिगुण-जातेरस्वीकारात् गुणानां चात्यन्तव्यावृत्तबुद्धेरजनक-त्वात् । अनित्येष्वपि तर्हि विशेषा वर्तन्तामिति चेत् न तेषु व्यावर्तकान्तरस्यैव दर्शनात् तस्मादभिन्नद्र-व्यगुणकर्मसामान्याः परमाणवः परस्परव्यावर्तकधर्म-वन्तः यथार्थव्यावृत्तप्रतीतिविषयत्वात् घटपटवत् । योगिनां तत्र कथं व्यावृत्तधीरिति चेत् योगज-धर्मसामर्थ्यात् । एवं तर्हि विशेषेष्वपि परस्परं व्या-वृत्तप्रतीतेरनुरोधाद्व्यावर्तकान्तरकल्पनम् एवं तत्र तत्रापीत्यनवस्थितिरेव स्यादिति चेत् न तेषां स्वत एव व्यावृत्तत्वात् । न हि प्रदीपप्रकाशः प्रकाशा-न्तरप्रकाश्यो यथा च श्वमांसं स्वत एवाशुचि तद्योगादन्यदन्तरमशुचि । न हि श्वमांसाशौचेपि तत्-सम्बन्धापेक्षा । तथा च विशेषा धर्मिग्राहकमानात् प-रस्परं स्वत एव व्यावृत्ता न व्यावर्तकान्तरमपेक्षन्ते । सन्तु तर्हि तदाश्रया परमाणवोऽपि स्वत एव व्या-

वृत्ताः किं विशेषकल्पनयापीति चेत् न द्रव्याणां व्यावर्तकान्तराधीनव्यावृत्तधीविषयत्वानियमात् । घटप-टादौ तथा दर्शनात् । अन्योन्याभावादेव परमाणूनां भेदधीसिद्धौ किं विशेषैरिति चेत् न अन्योन्याभावस्य वैधर्म्यनान्तरीयकत्वात् । अस्तु तर्हि पृथक्त्वमेव त-था त्वयापि परमाणुषु तस्यावश्याभ्युपगन्तव्यत्वादिति चेत् न पृथक्त्वस्यावधिनिरूप्यत्वेनावध्यावधिमद्भावस्य च तद्भिन्नधर्मघटितवैधर्म्याधीनत्वात् ॥

इति महामहोपाध्यायसन्मिश्रशङ्करकृतौ कणाद-रहस्ये विशेषपदार्थः समाप्तः ॥

अथ समवायः । तत्रासमवेतभावत्वं समवाय-त्वम् । स्वाश्रयान्योन्याभावासमानाधिकरणपदार्थ-विभाजकोपाधिमत्त्वं वा स्वाश्रयातिरिक्तपदार्थमात्रप्र-तियोगिकान्योन्याभावसमानाधिकरणपदार्थविभाजकोपा-धिमत्त्वं वा । किमत्र प्रमाणं विशिष्टबुद्धेर्विशेषण-विशेष्यस्वरूपमात्रघटितत्वादिति चेत् । इहेति बुद्धेः कारणत्वेन तत्सिद्धेः । भवतीह तन्तुषु पट इह पटे रूपमिह रूपे रूपत्वमिह पटे उत्क्षेपणमित्यादिप्रतीतिः । सा च सम्बन्धनिमित्ता दृष्टा । यथेह कुण्डे दधि इह कुण्डे बदराणि इह पुरुषे दण्ड इति । ननूक्तं स्वरूपस-

म्बन्धत्वादेवास्त्विति चेत् न स्वरूपाणामनन्तत्वेनानन्तसम्बन्धकल्पनापेक्षयैककल्पनाया लघुत्वात् । तर्हि इह भूतलेऽभाव इत्यपि प्रतीतिः सम्बन्धान्तरनिमित्तैव स्यादिति चेत् न तत्रापि स्वरूपसम्बन्धस्य सत्त्वात् । संयोगसमवाययोर्बाधे स्वरूपेणैवान्यथोपपत्तेः । समवायिनोः स्वरूपयोः परस्परपरिहारेणाविद्यमानत्वात् । स्वरूपसम्बन्धेन सम्बन्धिनोर्भूतलाभावयोः कदाचित् परस्परपरिहारेणापि विद्यमानतेति विशेषात् । अयुतसिद्धानामाधार्याधारभूतानामिहेति प्रत्ययनिमित्तं समवाय इत्यत्रायुतसिद्धिपदेनास्याप्यन्यस्य कटाक्षितत्वात् ।

स चायं नित्योतीन्द्रिय एकश्च । नित्यत्वे किं प्रमाणमिति चेत् इहेति प्रत्ययस्यापि सार्वदिकत्वम् । तच्च निमित्तसदातनत्वाधीनं । रूपादौ च रूपत्वादिसमवायस्यानित्यत्वे समवायिकारणसमवायिकारणकत्वं वक्तव्यम् । प्रतिषिद्धा हि गुणकर्मणोः समवायिकारणता । ननु रूपादीनां नित्यत्वमेकैका एव हि नीलपीतादिव्यक्तयः तदुत्कर्षापकर्षौ च विरोधिगुणान्तरसम्भेदासम्भेदाधीनौ तथा च रूपं नष्टमिति स्वरूपसमवायो नष्ट इत्यर्थ इत्यनित्यं एव सम-

वाय इति चेत न रक्तं रूपमुत्पन्नं श्यामं रूपं विनष्टमिति रूपालम्बनाया एव प्रतीतेरालम्बनान्तरकल्पनायां घटपटादिनाशप्रतीतेरप्येवं व्याख्याने सत्कार्यवादप्रवेशापत्तेः । ततु किं रूपसमवायो नित्य एव तथा सति श्यामनाशकालेऽपि तत्र प्रतीतिप्रसङ्ग इति चेत् न यथा तव रूपसत्त्वेऽपि तत्समवायवैकल्यात् तदप्रतीतिः तथास्माकं समवायसत्त्वेऽपि रूपवैकल्यात् तदप्रतीतेः । एतावाँस्तु विशेषः तवोत्पादविनाशप्रतीतेरालम्बनान्तरकल्पनं न तु ममापि । समवायिकारणं विनापि कार्यमुत्पद्यतामिति चेत् न भावकार्यस्य तथानभ्युपगमात् ।

ननु नित्यत्वं मृष्यामहे न त्वतीन्द्रियत्वं प्रतिपद्यन्ते हि लौकिकास्तन्तुषु पटः पटे शौक्ल्यं शुक्ला गौर्गच्छतीत्यादौ समवायमपि कथमन्यथा पटवन्तस्तन्तवः शुक्लगुणवान् पट इति व्यपदेशः प्रत्यक्षपरिकलितसमवायस्यैवमर्थत्वादिति चेत् अहं शरीरी मम शरीरमित्यादिविशिष्टप्रतीतेः सम्बन्धोपरागमन्तरेणैव दृष्टत्वात् । आत्मनः शरीरसंयोगोऽस्त्येवेति चेत् न तदुपरागनिबन्धनत्वे मैत्रशरीरेऽपि चैत्रस्य तथा प्रतीतिप्रसङ्गात् । तददृष्टाकृष्टत्वं तदीयत्वमिहेति चेत् अत एव सम्ब-

न्धातीन्द्रियत्वेऽपि प्रतीतिरियमुपपद्यत इति ब्रूमः। तर्ह्यसम्बद्धयोरपि शतं खलीनिम्नोः कथं न विशिष्टधीरिति चेत् समवायाभावात्। नहि तं विशिष्टप्रतीतेर्निमित्तमपि ब्रूमः। तर्हि कुण्डे दधीत्यपि प्रतीतिः कथं संयोगमालम्बते योग्यस्य सत इन्द्रियसन्निकृष्टस्य जन्यताविशिष्टप्रतीतौ भानं संयोगस्य न तु विशिष्टप्रतीतिरेव तज्ज्ञानमन्तरेण इत्यास्तां कृतं सगोत्रकलहेन। कथमेक एव समवाय इति चेत् न तद्भेदकल्पनायां प्रमाणाभावात्। रूपसमवायोरसमवाय इति भेदावसायोऽस्तीति चेत् न निरूपकभेदमात्रनिबन्धनत्वात् तस्य। अन्यथा दण्डसंयोगः पुरुषसंयोग इति प्रतीतेर्दण्डपुरुषसंयोगोऽपि भिद्येत। भिद्येत च शाबलेयधावलेयादिव्यक्तिभेदाद् गोत्वादिकमपि। तस्मादेक एव समवायो द्रव्यगुणकर्मसामान्यविशेषाणां विशिष्टप्रतीतौ निमित्तभावमापद्यत इति युक्तमुत्पश्यामः। अभावविशिष्टप्रतीतिस्तु स्वरूपसम्बन्धाधीना तत्र समवायाभावात्। अभावेष्वपि वैशिष्ट्यं सम्बन्धोस्तीति चेत् मैवम् वैशिष्ट्यस्य प्रत्यभावव्यक्तिनानात्वे स्वरूपसम्बन्धेनैव चरितार्थता। स्वरूपसम्बन्धः सम्बन्ध एव

न भवत्युभयानाश्रितत्वादिति चेत् न वैशिष्ट्याभ्युपगत्यापि तत्र विशिष्टप्रतीतेः स्वरूपसम्बन्धेनैवेष्टत्वात् । अन्यथानवस्थानात् न हि वैशिष्ट्येपि वैशिष्ट्यान्तरमभ्युपगन्तुमर्हति । न चाभावभूतलयोर्वैशिष्ट्यमित्यत्र स्वरूपसम्बन्धमन्तरेण पष्ठ्यर्थं पश्यामः । अस्तु तर्हि समवायवैशिष्ट्यमप्येकमेव सर्वाभावव्यक्तिष्विति चेत् न पटवति घटाभाववति पटाभावधीप्रसङ्गात् वैशिष्ट्येन सम्बन्धेन पटाभावस्यापि तत्सत्त्वात् । पट एव तत्र तदभावधीप्रतिबन्धक इति चेत् न प्रतिबन्धकस्य पटस्य वैशिष्ट्येन सम्बन्धेन तत्राभावाभ्युपगमात् । प्रतिबन्धकाभावसत्त्वेऽपि प्रतिबन्धकाभावाभावः पटोऽप्यस्तीति चेत् न पटसत्त्वेऽपि तदभावसत्त्वात् । कथमेवं स्यादिति चेत् आत्मानमुपालभस्व । अयमुपालम्भः समवायैकत्ववादिनस्तवापि वायौ रूपसमवायमङ्गीकुर्वतो रूपाभावाभ्युपगमेनेति चेत् न वायौ समवायेन रूपस्य स्वरूपसम्बन्धेन तदभावस्याभ्युपगमात् । ममापि संयोगेन घटस्य वैशिष्ट्येन तदभावस्य सत्त्वादविरोध इति चेत् अस्तु तावदेवम् तथापि श्यामरक्ताभावप्रतीतिः कथं ते स्यात् श्यामाभावरक्ताभावयोस्तत्र सत्त्वात् । श्यामं

तत्रोत्पन्नं रक्तं रूपं ध्वस्तमिति विशेषस्तत्रेति चेत् न गुणगुणितादात्म्यवादिनस्तत्र घटे सत्येव कथं श्याम-मुत्पन्नं रक्तं नष्टमिति । कथं न स्याद्भेदाभेदाभ्युपगमाद् श्यामात्मना जन्म रक्तात्मना च नाशो धर्मिणो न तु स्वरूपेणेति चेत् न भेदाभेदस्य विरोधेन निरस्तत्वात् । ननु वादान्तरमेव तत् समवायवन्दी-ग्रहो दुर्मोच एवेति चेत् न वैशिष्ट्यघटो ना-स्तीति प्रतीतिर्न तावत् वैशिष्ट्येन आत्मा-श्रयप्रसङ्गात् । नापि वैशिष्ट्यान्तरेण अनवस्थाप्रसङ्गा-पसिद्धान्तापातात् । तस्माद्वैशिष्ट्ये च तत्तदभावप्रती-त्यनुरोधः स्वरूपेणैव सम्बन्धेन त्वयाप्युपपादनीय इति विशेषात् । अस्माकं तु वायौ रूपसमवायेऽपि तद-त्यन्ताभावान्न तत्प्रतीतिरिति ॥

निरूपिता षट्पदार्थी वैधर्म्यमपि निरूपितमेव लक्षणप्रसङ्गेन सम्प्रति साधर्म्यं निरूप्यते । षण्णामस्ति-त्वमभिधेयत्वं ज्ञेयत्वम् । तत्रास्तित्वं विधिमुखप्रत्य-यवेद्यत्वम् । नन्वभावोऽस्तीत्यभावेऽप्येतत् साधर्म्यं ग-तमिति चेत् न नञुपरागेण विधित्वप्रतिक्षेपात् । त-मोऽस्तीति प्रतीतिरस्तीति चेत् न नञर्थान्तर्भावेणै-व तमःपदप्रवृत्तेः भाभावो हि तम इति । अभिधेय-

त्वमभिनानकर्मभावत्वम् सत्पदाभिधेयत्वं वार्थाभिधेयत्वं वा । ज्ञेयत्वमपि सत्ताप्रकारकज्ञानविषयत्वम् ज्ञानविषयभावत्वं वा । यद्वा षण्णामित्युपलक्षणं सत्तानामपि साधर्म्यमेतत् । तत्र चास्तित्वमस्तीतिविषयत्वमेव तच्चाभावसाधारणमन्यत् यथाश्रुतमेव । एवं च धर्मत्वधर्मित्वादिकमपि सर्वं केवलान्वयि साधर्म्यमिह प्रत्येतव्यम् । नित्यद्रव्याणि विहाय चाश्रितत्वम् तच्च समवेतत्वमेव । समवायस्यापि स्वरूपसम्बन्धेन समवेतत्वात् इह रूपसमवाय इति प्रतीतेः । स्वरूपसम्बन्धेन प्रतीतिरियमिति चेत् न स्वरूपस्य समवायानतिरेकात् अत एवान्यत्रनित्यद्रव्येभ्य इत्युक्तम् न तु समवायोऽपि पर्युदस्तः । द्रव्यादीनां पञ्चानामपि समवायित्वमनेकत्वं च । तत्र समवायित्वं समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वम् । समवेतत्वं च स्वरूपासम्बन्धसमवायेन विवक्षितम् । अनेकत्वं स्वाश्रयान्योन्याभावसमानाधिकरणपदार्थविभाजकोपाधिमत्त्वम् समवायस्यैकत्वादेतत् तत्र नास्ति । गुणादीनां पञ्चानां निर्गुणत्वनिष्क्रियत्वे । तच्च गुणवद्वृत्तिपदार्थविभाजकोपाधिशून्यभावत्वं कर्मवद्वृत्तिपदार्थविभाजकोपाधिशून्यत्वं च । द्रव्यादीनां त्र-

याणां सत्तासम्बन्धः सामान्यविशेषवत्त्वम् । स्वसमयार्थशब्दाभिधेयत्वं धर्माधर्मकर्तृत्वं च । कर्तृत्वमिह जनकत्वमात्रं सत्तासमवायित्वं सत्ताव्याप्यजातिमत्त्वम् वैशेषिकपरिभाषयार्थशब्दाभिधेयत्वम् धर्मजनकवृत्तिपदार्थविभाजकोपाधिमत्त्वम् अधर्मजनकवृत्तिपदार्थविभाजकोपाधिमत्त्वं च तदानुपूर्व्येण बोद्धव्यम् । ननु सामान्यस्यापि धर्माधर्मजनकत्वमस्ति गां दद्यात् गौर्न पदा स्प्रष्टव्येति विधिनिषेधयोस्तदुपरागेण दर्शनादिति चेत् न अवच्छेदकतामात्रेण तदुपयोगात् । विहितस्य दानस्य तत्रासम्भवात् निषिद्धस्य स्पर्शस्य च तत्राभावात् न हि गोत्वे कस्यचित् स्वत्वं स्पर्शाश्रयत्वं वेति । एवं तर्हि अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्यत्रापि स्यादारुण्यमवच्छेदकमात्रं न तु धर्मजनने तदुपयोग इति चेत् न आरुण्यस्य विशेषणभावेनान्वये क्रयसाधनत्वप्रतीतेः । सोमक्रयद्वारा चारुण्यस्य धर्मसाधनत्वात् गुणविशेषस्य पद्मरागादौ उत्कर्षसाधनत्वप्रतीतेः । द्रव्यगुणकर्मणामेव कार्यत्वमनित्यत्वं च । तच्च कार्यवृत्तिपदार्थविभाजकोपाधिमत्त्वम् । ध्वंसप्रतियोगिवृत्तिपदार्थविभाजकोपाधिमत्त्वं च । त्रयाणामेव साधर्म्यान्तरं कारणत्वम् ।

तच्च ज्ञानेतरकार्यजनकत्वम् । पारिमाण्डल्यद्वित्वादिसंख्यादौ च नैतदपेक्षितम् । नित्यद्रव्याणि विहाय त्रयाणामेव द्रव्याश्रितत्वम् । सामान्यविशेषसमवायानां स्वात्मसत्त्वम् । तच्च सत्ताशून्यत्वे सति सत्प्रत्ययविषयत्वम् । बुद्धिलक्षणत्वं चानुवृत्तबुद्धिव्यावृत्तबुद्धिहेतुबुद्धिविषयत्वमेव लक्षणं सामान्यादीनां त्रयाणामित्युक्तम् । वादिविनोदे किरणावलीनिरुक्तिप्रकाशे च कृतव्युत्पादनमेतत् ॥

महर्षेः श्रीकणादस्य रहस्यमतिनिर्गतम् ।
पित्रा भवनाथेन न्यवेदितमिहाखिलम् ॥

इति महामहोपाध्यायसन्मिश्रश्रीभवनाथात्मजमहामहोपाध्यायसन्मिश्रश्रीशङ्करकृतं कणादरहस्यं समाप्तम् ॥

ल० सं० ५४२ चैत्रशुक्ल एकादश्यां शनौ दसुआलग्रामे महामहोपाध्याय श्रीपण्डितराजस्याज्ञया लिखितमिदं कणादरहस्यपुस्तकं श्रीविश्वनाथकरणेन ॥



THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NOS. 231 & 255.

# प्रशस्तपादभाष्यटीकासंग्रहः ।

तत्र

## कणादरहस्यम् ।

श्रीशङ्करमिश्रविरचितम् ।

प्रशस्तपादभाष्यसमालोचनं तर्कालङ्कारभाष्यपरीक्षा च ।

वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालयाध्यक्षेण पण्डित-विन्ध्येश्वरीप्रसादद्विवेदिना प ढुण्ढिराजशास्त्रिणा च संस्कृतम् ।

# PRAŚASTAPÂDABHÂSHYAṬÎKÂSAMGRAHA

A Collection of Commentaries on the Praśastapâdabhâshya,

KANADARAHASYAM

By ŚRÎ ŚANKARA MIŚRA,

and Reviews on the Praśastapâda Bhâshya and Tarkâlankâra's Vaiśeshika Bhâshya

Edited by, *Pandit Vindhyeśwari Prasâda Dwivedin, Librarian, Government Sanskrit College, Benares,*

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES
AGENTS OTTO HARRASSOWITZ, LEIPZIG
PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY
PROBSTHAIN & CO, BOOKSELLERS, LONDON
*Printed by Jai Krishna Das Gupta, at the Vidya Vilas Press, Benares.*

1917

*Price Rupees two.*

श्रीगणेशाय नमः ॥

# प्रशस्तपादभाष्यसमालोचनम्

## तर्कालङ्कारभाष्यपरीक्षणं च ।

अथाभिनवं वैशेषिकभाष्यमालोच्यते ॥

तत्र लोके येष्वर्थेषु प्रसिद्धानि यानि पदानि सति सम्भवे तदर्थान्येव सूत्रेष्वपि मन्तव्यानि ।

इत्येतद्भाष्यस्य किन्तात्पर्यं ? यदि शक्तिप्रतिपत्त्यर्थस्यनो लक्षणाग्रहं विना यानि पदानि यानर्थान् प्रतिपादयितुमीशते सूत्रेष्वपि तदर्थपराण्येव तानि मन्तव्यानीति तदा पूर्वोत्तरमीमांसयोः प्रथमसूत्रयोर्जिज्ञासाशब्दयोर्विचारपरत्वेनावश्यमभ्युपगन्तव्ययोः प्रयोक्त्रोः सूत्रकारयोरनुयोग आपतेत् । एवं न वक्तव्यं सति सम्भव इत्युक्तम्भाष्ये भाष्यकारेण अस्तु तथा भाष्यकार एवं पृष्टः सति सम्भव इत्यस्य कोऽर्थ इति यद्येवमुत्तरयेत् पूर्वापरग्रन्थयोः सर्वजनानुभवसिद्धेषु पदार्थेषु च विरोधो नापतेत् यादृशेऽर्थेऽङ्गीकृते तादृशार्थकानि सूत्रेष्वपि पदानि तदा भाष्यकारोऽस्माभिरेवम्प्रतिवक्तुं शक्येत व्यर्थोऽयं तत्र लोक इत्यादिवचनाडम्बरो भवतः । एवमवश्यमङ्गीकार्यं यत् भगवद्भिः सूत्रकृद्भिः कि-

ञ्चन प्रयोजनमन्तरेणैवासम्बद्धकमप्यर्थं प्रतिपादयितुं तद्वाचकं पदं न प्रयुक्तमिति । ननु तथापि सूत्रस्थपदानां साहजिकेऽर्थे तात्पर्यं न कुटिलेऽर्थे इति चेन्न तात्पर्यानवबोधात् । दत्तोत्तरं ह्येतदनुपदमिति । अर्थे साहजिकत्वकुटिलत्वयोर्दुर्वचत्वाच्चेत्यास्तां विस्तरः । तस्मात् मीमांसाभाष्यलिखितसन्दर्भानुवादेन स्वभाष्यस्य भाष्यत्वापादनमेव गूढं प्रयोजनमिति मन्यामहे । मीमांसाभाष्यं द्रष्टव्यम् ॥

सम्प्रति भाष्ये व्यवस्थापिता अर्था आलोच्यन्ते ।

सोयमल्पेन सूत्रेण तन्त्रार्थ उद्दिष्टो वेदितव्य इति भाष्यम् ।

तत्र सूत्रस्याल्पत्वं किन्तद्वक्तव्यम् । सकलतन्त्रार्थप्रकाशकत्वं यदि तदेतत्सूत्रबोधितपदार्थेभ्योऽतिरिक्ता अपि पदार्थाः स्वीकर्तव्याः स्युस्तच्चानिष्टं यदि चाऽल्पाक्षरत्वं सूत्रस्याल्पत्वमुच्येत तदपि प्रामाणिकगर्हणामाप्तुमीष्टे । यतः सूत्रलक्षणमेतत् लक्षणयुक्तेन सूत्रेण तन्त्रार्थ उद्दिष्ट इति वचनम् । एवमल्पशब्दो हि बहुशब्दानर्थे प्रत्यनीकभावापन्नस्यैवार्थस्याभिधायकः । यथा चैत्रस्य बहूनि धनानि न सन्तीत्युक्तेऽल्पानि सन्तीति प्रतीयते तथा चाल्पेन सूत्रेणोद्दिष्ट इत्यनेन द्वित्रैः सूत्रैरुद्दिष्ट इत्येव प्रतिपत्तव्यं । तदप्यसङ्गतम् । अल्पशब्दाप्रतिपादितैनैकेनैव सूत्रेणोद्दिष्टत्वात् । एवञ्चान्वीक्षिकीभाष्ये श्रीमता भगवता पक्षिलस्वामिना भाषितमनालोच्यैवैवम्भाषितमभिनवभाष्ये तद्भाष्यकारेणेति विवेचयाम इति ॥

द्रव्यगुणकर्म्माणीति त्रयः पदार्था अन्ये सूत्रकारोक्ताः पदार्था एतेष्वेवान्तर्भवन्तः शास्त्रस्य प्रस्थानभूताः शास्त्रस्य तत्तत्पदार्थप्रस्थानकत्वज्ञापनाय पृथगुद्दिष्टाः ।

इत्युक्तमभिनवभाष्यकारेण तत्र पृच्छ्यते ? आन्वीक्षिकी-
भाष्ये यथासम्भवं प्रमेयादिष्वन्तर्भूतस्य संशयादेः पृथग्वचन-
प्रयोजनाभिधानावसरे इमास्तु चतस्रो विद्याः पृथक्प्रस्थानाः प्रा-
णभृतामनुग्रहायोपदिश्यन्ते इत्यादिना प्रबन्धेन प्रस्थानभे-
दज्ञापनाय संशयादयः पृथगुद्दिष्टा इति श्रीमता भगवता प-
क्षिलस्वामिनाऽभिहितम् । श्रीमदुद्द्योतकराचार्येणापि वार्त्तिके
अग्निहोत्रहवनादिप्रस्थाना त्रयी हलशकटादिप्रस्थाना वार्ता
स्वाम्यमात्यादिभेदानुविधायिनी दण्डनीतिः संशयादिभे-
दानुविधायिनी आन्वीक्षिकी इत्यभिहितम् । आन्वीक्षिकी
त्रयी वार्ता दण्डनीतिश्चेति चतस्रो विद्या गणितास्तासु च वै-
शेषिकतन्त्रं नोल्लिखितम् । एवञ्च वैशेषिकतन्त्रस्याऽप्यु-
द्दिष्टैः पदार्थैः प्रस्थापनं कुतो लब्धमिति । अथ वैशेषिकी-
तन्त्रस्यान्वीक्षिक्यामन्तर्भावादेतल्लब्धमिति चेन्न यत. संशया-
दिभिरेव प्रस्थापनमान्वीक्षिकशास्त्रस्यान्तर्भाष्यकारादिभिरभि-
हितं न ॥ सामान्यादिभिरित्यपहास्त्रश्रुतकल्पनेयमभिनवभा-
ष्यकारस्यैति । एवं तथाहि शास्त्रमिदं वैशेषिकं भवति
अन्यथा त्वध्यात्मविद्यामात्रमिदमुपनिषद इव स्यादिति पद-
चोद्भाष्ये भाष्यकारस्तदपि स पृच्छयते किमस्याध्यात्मविद्या-
त्वे प्रामाण्यमेव न घटते किंवाऽन्यः कोऽप्यपतेद्दोषः ॥
तत्राप्रामाण्यमुपनिषत्सदृशत्वादेवासङ्गतवचनम् अतो द्वितीयो-
ऽवशिष्टः पक्षः । स कीदृग इति प्रश्ने किमतिवक्ष्यति
भाष्यकारः । यदिवा किञ्चिदेतदिवाचक्षीत ततः प्रेक्षावन्तो
न तुष्येयुः । एतेनैव सामान्यादीनां पूर्वेषु यथायथमन्त-
र्भावोऽपास्तः श्रीमद्भिर्भगवद्भिः सूत्रकृद्भाष्यकृट्टीकाकृद्भिः
कण्ठत एव पृथगभिधानात् अत्रैव विरम्यते ॥

यद्यपि सामान्यादीनां सूत्रकारादिभिः पृथग्वचनादेव तेषामतिरिक्तत्वं लब्धं तथापि तेषामतिरिक्तत्वे युक्तिं ऋषीणान्तत्कल्पनाञ्चानुमतिञ्च दर्शयितुं पुनरुच्यते ॥

सामान्यादयो हि द्रव्यादिष्वन्तर्भवन्तो न व्यतिरिच्यन्ते प्रस्थानभेदोपपत्तेस्तु पृथग्वचनमिति भाष्यम् ।

ननु सामान्यादीनां द्रव्याद्यनन्तर्भूतत्वे किं सामान्यशब्दार्थत्वं न घटते किं वा पूर्वापरसूत्राणामनन्वितार्थकत्वं स्यादुत तानन्तर्भाव्य तेषु केश्चिदपि प्राचीनैर्निबन्धृभिः केऽपि निबन्धा न निबद्धाः । तत्र न चरमः भगवद्भिः प्रशस्तपादाचार्यादिवनाचार्यवर्द्धमानोपाध्यायरघुनाथशिरोमणिप्रमुखैः सामान्यादीनां द्रव्यादिबहिर्भावमङ्गीकृत्यैव तत्तन्निबन्धानां निबद्धत्वात् । यदि द्वितीय एव पक्ष आलम्ब्येत तदा पृष्टो भवान् द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता इत्येतत्सूत्रस्यार्थं स्वानुभवमनाच्छाद्य व्याचष्टाम् । तथा च तेषामतिरिक्तत्वानभ्युपगन्तुरेव सूत्राक्षरयोजनाभरयन्त्रणा महती स्यात् । अतिरिक्तत्वाङ्गीकारेऽनन्वितार्थकत्वस्य कः प्रसङ्गः । नापि प्रथमः यतः समानानां भावः सामान्यमिति हि सामान्यशब्दव्युत्पत्तिः सा खल्वतिरिक्तत्वानतिरिक्तत्वयोस्तुल्या । भवतु तावदेवं अतिरिक्तत्वाङ्गीकारो हि केनचित् प्रयोजनेन प्रयुक्तोऽवश्यमभ्युपगन्तव्योऽन्यथा सप्तमपरोऽप्यङ्गीक्रियेत । एवञ्चातिरिक्तत्वमुपगन्त्रा प्रयोजनं प्रदर्शनीयमिति चेत् प्रतीतिनिर्वाहः प्रयोजनमिति सन्तोष्टव्यमायुष्मता । यदि नाम सामान्यं द्रव्यमेव स्यात् तदा घटः सन् गुणः सन् कर्म सदित्यादिप्रत्ययाः किमालम्बनाः स्युः । न च सन् घटः इत्यादिप्रत्य-

याः सत्त्वघटत्वादिसद्भावं साधयन्ति न तु तेषां जातित्व-
मिति वैदान्तिकैरभ्युपगतमेव मयाऽभ्युपगन्तव्यमिति वाच्यम्
वैदान्तिकैर्हि ब्रह्मभिन्ने नित्यत्वस्य समवायसम्बन्धस्य चा-
नभ्युपगन्तव्यत्वेन तेषां जातित्वानभ्युपगमोक्तेः । शोभित-
त्वेऽपि वैशेषिकतन्त्रभाष्यकृतो हास्यास्पदत्वात् । यदि
तु मयाऽपि समवायो गुणान्तरमुच्यते पारमार्थिकनित्यत्वं
परमेश्वरस्यैव तथा चास्मन्मतेऽपि निरुक्तं सामान्यलक्षणं न
घटते कथं पूर्व्वोक्तमत्त्वयानां सादृश्यसामान्यावलम्बनत्वं शक्य-
वचनं स्यादतः प्रतीतिनिर्व्वाहोतिरिक्तसामान्याङ्गीकारप्रयोजनं
भवदुक्तं न विचारपथमारोहति इत्युच्यते तदाऽस्माभिरेवम्पृष्टो
भवान् ब्रवीतु किमेतेषामन्यतमे व्यवस्थापिते क्षमा भवि-
ता भवतः किम्वा यथा ये यत्राऽन्तर्भाविता ये वा खण्डि-
ता ये वाऽतिरिक्ता व्यवस्थापितास्ते ते यथायथं ततो ब-
हिर्भाव्य व्यवस्थापनीया मण्डनीयाः खण्डनीयाश्चेति । सर्वै-
वमस्माभिरवश्यं वक्तुं शक्यं यत् श्रीमद्भिः प्रशस्तपादा-
चार्य्योदयनाचार्य्यवर्द्धमानोपाध्यायरघुनाथशिरोमणिभिर्यथाक्र-
मं वैशेषिकतन्त्रभाष्यतट्टीकानिर्म्मातृभिः सर्वैरेव सामान्या-
देः, पूर्वेषु पदार्थेष्वनन्तर्भावपुरःसरन्तत्तद्ग्रन्थानां निर्म्माणा-
त्, ते पूर्व्वेषु नान्तर्भूता इति । यद्येवं ब्रूयात् धर्म्मशा-
स्त्रे ऋषिवचनप्रामाण्यादाचारप्रवृत्तिवत् दर्शनशास्त्रे कस्य-
चिदुक्त्यैव पदार्था अङ्गीकरणीया नैवं किन्तु युक्त्या तथा
च सामान्यादेरतिरिक्तत्वे युक्तिं न पश्यामीति तदा प्रती-
तिनिर्वाहप्रयोजनमतिरिक्तसामान्याद्यङ्गीकारस्य यदुक्तन्तदेव
सारमिति गृह्यताम् । तथाहि यदि सामान्यं व्यक्तिस्वरूपं त-
दाऽनुगताकारा प्रतीतिः किं निमित्तिका । न हि निमित्तं कि-

श्चिदन्तरेणैव सा प्रसिद्धेत् व्यक्तिस्तु नानुगता । अथ यामूद्व्यक्तिरनुगता कीदृशी प्रतीतिः सा या कंचिदनुगतं विषयमन्तरेण निर्व्वोढुं न शक्नुयात् इति चेत् भद्रमुक्तम्भवताऽवधीयताम् । गुणवद्द्रव्यमिति प्रतीतिः सा तथाहि किमपि द्रव्यं कञ्चन गुणं विषयीकुर्य्यैतादृशी प्रतीतिरुदेतीत्यविवादमेव । विषयीभूतव्यक्तीनान्तु नानुगतत्वं । कञ्चनानुगतं विषयमालम्ब्यैव प्रतीतीनामनुगताकारत्वं भवताऽपि वक्तव्यम् । स च विशेष्यतावच्छेदकाविशेषणतावच्छेदकद्रव्यत्वगुणत्वादिजातिरूप एव । स च यदि व्यक्तिस्वरूपः कथं तस्य प्रतीतेरनुगताकारकत्वानिर्वर्तकत्वं । न हि अनेकासां व्यक्तीनामेकं स्वरूपमिति विपश्चितां श्रद्धेयवचनम् इत्यकामेनापि प्रतीतीनामनुगताकारकत्वाऽन्यथाऽनुपपत्त्या कल्प्यमानोऽनुगतो विषयतावच्छेदको जातिरूपः पदार्थो व्यक्तेर्व्यतिरिक्त एवेति । तथा कार्य्यकारणभावान्यथाऽनुपपत्तिरपि पूर्वेभ्यो वहिर्भूतां जातिं ग्राहयति । तथाहि समवायेन कार्य्यमात्रे प्रति तादात्म्येन द्रव्यं कारणमिति सिद्धान्तः । स च द्रव्यत्वस्यानुगतस्यापेक्षोपपत्तिकः । एवमन्ये वहवो हेतुहेतुमद्भावाः ईदृशाः सिद्धान्तितास्ते सर्वे जातेर्द्रव्यापतिरिक्तत्वमन्तरेण नात्मानं लब्धुं शक्नुयुरिति । सामान्यादयो हि द्रव्यादिष्वन्तर्भवन्त इत्याद्यभिनवभाष्योक्तिरसङ्गतेत्यङ्गीक्रियतामिति ॥ अथ श्रीमद्भिः प्रशस्तपादाचार्य्यैः सामान्यादेर्द्रव्याद्यतिरिक्तत्वं प्रतिपादितं क्व दृष्टमिति चेत् सत्यन्तन्निरीक्ष्यतां सामान्यं द्विविधं परमपरञ्चेति । तत्रानुवृत्तिकारणं परं सत्ता महाविषयत्वात् सा चानुवृत्तेरेव हेतुत्वात् सामान्यमेव । द्रव्यत्वाद्यपरं अल्पविषयत्वात् तच्च

व्यावृत्तेरपि हेतुत्वात् सामान्यं सद्विशेषाख्यामपि लभते इति प्रशस्तपादभाष्यम् । तत् सत्तादेर्द्रव्याद्यात्मकत्वमुत द्रव्यादिव्यतिरिक्तत्वं प्रतिपादयतीति भवतैव स्वानुभवमगोपयित्वा भणनीयम् । एवं किरणावल्यां श्रीमदुदयनाचार्येण सामान्यं विभजते सामान्यमिति समानानां भावः स्वाभाविकोऽनागन्तुको बहूनां धर्म्मः सामान्यमित्यर्थः । तथा च धर्म्मिणां बहुत्वे धर्म्मस्य चानागन्तुकत्वे विवक्षिते नित्यत्वे सत्यनेकवृत्ति सामान्यमिति लक्षणं सूचितम् इत्यभिहितम् । एवं किरणावलीप्रकाशे समानानां भाव उपाधिरपीत्यत उक्तं स्वाभाविक इति । सोऽपि स्वभावजन्यस्तद्वैसिद्धिः स्वभावाश्रितश्चोपाधिरित्यत उक्तमनागन्तुक इति साक्षात् समवेत इत्यर्थः । नित्यमित्येकमिति स्वरूपाभिधानमात्रं न तु लक्षणार्थमित्येके । एकं लक्षणमिति योऽयं लक्षणान्तरञ्च असमवायित्वे सत्यनेकसमवेतत्वम् इत्यन्ये । अनेकवृत्तित्वं स्वाश्रयान्योन्याभावसामानाधिकरण्यमित्यर्थः । इति श्रीमता महामहोपाध्यायेन वर्द्धमानोपाध्यायेनाभिहितमिति ऋषिकल्पानां सर्वशास्त्रपारदृश्वनामेतेषां वचनमनादृत्याधुनातनस्याल्पज्ञस्य शास्त्रस्यैकदेशदर्शिनो निबन्धृम्मन्यस्य वचः कथं प्रेक्षावदपेक्षणीयम्भवेत् इति ॥

विशेषोऽपि न पदार्थान्तरम् इति भाष्यभाषितमालोच्यते ॥

अथ विशेषस्य द्रव्यादिभ्यो बहिर्भावे किं मानं यथा स्थाणुपुरुषयोः सामान्यमुच्चैस्तरत्वं आरोहपरिणाहादिकं वा तथा वक्रकोटरादिकं करादिमत्त्वं वा विशेषः । स्थाणुपुरुषयोः कस्मिंश्चिद्धर्म्मिणि तयोः सामान्यं संविदानः पुमान् संशेतेऽयं स्थाणुर्वा पुरुषो वेति । यदा पुनस्तयोः कंचिद्विशे-

षमुपलभने तदा निश्चिनुतेऽयं स्थाणुरेव पुरुष एव वेति । तथा द्रव्यसामान्यमित्युक्ते नवानान्द्रव्याणां ग्रहणं द्रव्यविशेष इत्युक्ते च कस्यचिद्द्रव्यस्य । एवं गुणादावपि । एवञ्च केषामपि पुरुषाणामनुभवमनःरूढो द्रव्याद्यतिरिक्तो विशेषः पदार्थः व्योमकमलिनीप्रसूनपूतिगन्धायते इति चेत् सत्यं भवनैवं वक्तुं शक्यमेव । अस्माभिर्वेदकल्पत्वेनाभिमताश्चिरन्तनानामृषिकल्पानां वचनमभिधीयमानं प्रथमं तावत् शुश्रूष्यतां प्रशस्तपादभाष्ये नित्यद्रव्यवृत्तयो ह्यन्त्या विशेषास्ते खल्वत्यन्तव्यावृत्तिहेतुत्वाद्विशेषा एव विशेषाः इति । एवं किरणावल्यां नित्येति विशेषा इति बहुवचनेनानन्त्यं विवक्षितं के ते अन्त्याः अन्तेऽवसाने भवन्ति सन्तीति यावत् एभ्योऽपरविशेषा न सन्तीत्यर्थः । सामान्यरूपेभ्यो हि विशेषेभ्योऽपरे गुणादयो विशेषाः सन्ति एभ्यस्तु नापरे किन्त्वेष्वेव वैशिष्ट्यं समाप्यते । क ते वर्तन्तेऽत उक्तं नित्येति । अयमर्थः अनित्यद्रव्येषु तावदाश्रयादिभिरेव विशिष्टबुद्धिरुपपन्नेति ततोऽधिकेषु विशेषेषु प्रमाणाभावः नित्येषु द्रव्येषु आश्रयरहितेषु समानजातीयेषु समानगुणकर्म्मसु च भवितव्यं व्यावर्तकेन धर्म्मेण व्यावृत्तत्वात इत्यादि श्रीमदुदयनाचार्य्येणापि यदुक्तमेतत् सर्वमसङ्गतमेव वक्तव्यम्भवता । अन्यथा स्ववचो व्याहतं स्यात् । तथाच कथञ्चिदपि प्रेक्षावद्भिरनुपेक्षणीयवचनैश्चिरन्तनैरभिहितानर्थान् विरुन्धनोऽर्थान् प्रतिपादयन्त्यो भवद्वाचो न प्रेक्षावतां शुश्रूषणीयतामाप्तुमर्हन्ति । यदि तु ते यथा ग्रन्थकाराः प्रेक्षावदपेक्षणीयवचनाः अहमपि कथन्तथा न स्यान्तथा च तेषान्तथा वचनादेव मदुक्तिः कथन्दूष्या इति पूर्व्वमेवाभिहितवान् इत्यभिधीयेत तदा कि-

रणावल्यामाचार्य्योक्तिर्न विवेचितेति मन्यामहे । तथाहि नित्यद्रव्यैरनवयवैरनाधारैः समानगुणकर्म्मभिः परस्परं व्यावर्तमानैर्भवितव्यं तेषां ये व्यावर्तकास्ते स्वतो व्यावृत्ता विशेषा इत्युच्यन्ते इति सर्वशास्त्रपारङ्गतधीभिः पूर्वतनसुधीभिरुररीकृताः पूर्वेभ्यो बहिर्भूता विशेषा नोररीक्रियन्ते कथमतिप्रेक्षावता भवता । अथ नित्यद्रव्याणामन्योन्यव्यावर्तकानि स्वयं स्वतो व्यावृत्तस्वभावानि धर्म्मान्तराण्यनभ्युपगन्तुः किम्पातकम्भवेदुत नित्यद्रव्याणि परस्परव्यावृत्तानि सार्वजनीनानुभवगोचरीकृतान्यृते व्यावर्त्तकेभ्यो धर्मान्तरेभ्योऽनुपपद्यमानानि व्यावर्त्तकान् धर्म्मानपेक्षन्ते इति । तत्र नाद्यः पातकयोनिषु तस्यापरिगणनात् अतो द्वितीय एवापेक्षणीयः पक्षः । तत्र यदि भवाद्भिरङ्गीकृतेषु विशेषेष्वतिरिक्तेषु नित्यद्रव्याणां परस्परव्यावर्त्तकत्वस्वयमनपेक्षणीयविशेषान्तरत्वप्रभृतिरूपो महिमाऽङ्गीकार्य्यस्तदा नित्यद्रव्येष्वेव किन्न तादृशो महिमा कल्प्यते इति चेत् सत्यमुदितम्भवता किन्तु भवानेवमस्माभिः पृष्टो व्याहरतु किं नित्यद्रव्याणां ये प्रसिद्धा निरवयवत्वादयः स्वभावास्तेषामन्यतमः कश्चित्तादृशोऽभ्युपेयते किंवाऽपरः कोऽपि न तावदाद्यः तेषामनेकसाधारणत्वात् । नित्यद्रव्याणां परस्परभेदं ज्ञापयितुं नेशते ते । अभ्युपगतद्वितीयपक्षे श्रीमति फलितमस्माकं मनोरथद्रुमेण । तथाहि अस्माभिर्नित्यद्रव्येषु प्रत्येकं विश्रान्ताः तेषां व्यावर्त्तकाः नाम्ना विशेषाः इत्यभ्युपगम्यते भवताऽपि प्रत्येकं नित्यद्रव्येषु विश्रान्तास्तेषां तादृशाः स्वभावा इत्युच्यते इति ॥

समवायस्तु सम्यगाप्तिरेकीभावः । अथाप्येतदुक्तम्भवति

समवायोऽपृथग्भाव इति योऽयं पृथक्त्वप्रतिद्वन्द्वी गुण इतीति भाष्यम् ।

अथ समवायस्यापृथग्भावत्वं पृथक्त्वप्रतिद्वन्द्विगुणान्तरत्वं यदभिधीयते भवता तत् कस्य हेतोः किं सर्व्वेषामेव गुणानां परस्परं प्रतिद्वन्द्विभिर्गुणान्तरैर्भवितव्यं किं वा द्रव्यगुणकर्म्मणामेव सूत्रकारेणार्थपदेनाभिहितत्वात् तेभ्योऽतिरिक्तस्य प्रमाणागोचरत्वेनोक्तेष्वेव सूत्रोक्तस्वेतरत्रयस्यान्तर्भावणीयत्वात् । न तावदाद्यं रोचयेम रूपरसाद्यनेकेषां गुणानान्तदृदर्शनात् । ततश्च द्वितीय एव पक्षः कक्षीकरणीयो भवतः । तत्रैवमस्माभिरवश्यमभिधातुं शक्यं सूत्रकारेण यदर्थपदेन प्रथमोक्तं त्रयमेव गृहीतं तत्तात्पर्य्यविवरणावसरे ॥ द्रव्यादीनां त्रयाणां सत्तासम्बन्धः सामान्यविशेषवत्त्वं स्वसमयार्थशब्दाभिधेयत्वं धर्म्माधर्म्मकर्तृत्वञ्चेति प्रशस्तपादभाष्ये प्रतिपादितं । तत्किरणावल्यां द्रव्यादीनां त्रयाणामिति । सत्तासम्बन्धः समवायलक्षणः सामान्यविशेषा द्रव्यत्वादयः तद्वत्त्वं निरुपपदेनार्थशब्देन द्रव्यादयस्त्रय एवाभिधीयन्ते नापरे । एष एव समयो वैशेषिकाणां स्वशास्त्रे व्यवहारलाघवाय यथा "ध्यानधारणासमाधित्रयमेकत्र संयम इति" योगानुशासने । द्रव्यादित्रयन्तु प्रत्येकसमुदायाभ्यामिति विशेषः इत्युक्तं तथा च चिरन्तनभाष्यटीकाकिरणावल्यादिषु कथञ्चिदप्यशक्याप्रामाण्यशङ्केषु स्फुटतरमभिहितानन्तर्भावस्य समवायस्य गुणत्वम्भवतोदीर्यमाणं कथं श्रद्धास्यन्ति शुद्धधियः । अवेदमवधातव्यं समवायस्य गुणान्तर्भूतत्वे द्रव्यगुणकर्म्मसु सामान्यविशेषयोः द्रव्यादिव्यतिरिक्तत्वेनावश्यमभ्युपगन्तव्ययोः सत्तानियामकसम्बन्धत्वं

नोपपन्नं स्यात् । तथाहि द्रव्यगुणकर्म्मभ्योऽतिरिक्तमर्थमनभ्युपगच्छताऽपि भवता द्रव्ये गुणकर्म्मणोः सम्बन्धः कश्चिदेष्टव्यः । स च संयोगो न शक्यवचनः किन्तु समवायः स एव सामान्यविशेषयोरपि सत्तानियामकः । स च गुणो भवन् नैवं विशिष्टधियं जनयितुं प्रभवेत् इति । एवञ्च खण्डनकारेणाप्युक्तम् अन्यथाऽनुपपत्तिश्चेदस्ति वस्तुप्रसाधिका पिनष्टि दृष्टिवैमत्यं सैव सर्व्वबलाधिका इति । अथ समवायस्य गुणत्वेऽङ्गीकृते तेनैव द्रव्यगुणकर्म्मसु यथासम्भवं द्रव्यगुणकर्मणां विशिष्टधीः कथञ्चोपपादयितुं शक्यते गुणे गुणाङ्गीकारे किं देवताशापोऽस्ति अथवा शास्त्रे पूर्व्वापरविरोध आपतेत् । तत्र नाद्यं रोचयेय मया ॥ नाभ्युपेयते । नापि द्वितीयः गुणेऽपि केषाञ्चिद्गुणानामभ्युपेतव्यत्वात् । सूत्रकारेण हि यद्गुणवानिति गुणलक्षणे उक्तं तस्य गुणविशेषाभाववदर्थकत्वेनैव मया भाष्ये व्यवस्थापितत्वात् एकत्वपृथक्त्वादयः स्वाभाविकगुणाः न शक्याः प्रतिषेद्धुमित्यादिग्रन्थसन्दर्भेणेति चेत् सत्यमुक्तं लोकोत्तरप्रज्ञेन तथापि किञ्चिदस्माभिरभिधीयमानं कृपयाऽवधातव्यं । तथाहि एकं रूपं द्वे रूपे एकं कर्म्म द्वे कर्म्मणी इत्यादिप्रत्ययस्य भाक्तत्वे किं विरुध्यात् । यदि च एकत्र भाक्तताऽपरत्र मुख्यता इत्यतोऽपरः को विरोध इति व्याहरेत् तदा चैत्रः पचति इत्यत्र पाकानुकूलकृतिमत्त्वबोधकतयाख्याते प्रयोगो मुख्यः । काष्ठं पचति स्थाली पचतीत्यादावनुकूलव्यापारबोधकतया स भाक्त इति प्रामाणिकैरभिधीयते । अतएव वैयाकरणमतं शरणीकृत्याख्यातस्याश्रये शक्तिरुपेयतामिति चेद । तथापि चैत्रः पिपतिषतीत्यत्र मुख्यत्वस्य कूलं पिपतिषती-

त्यत्र च भाक्तत्वस्य भवताऽपि स्वीकर्त्तव्यतया एवं गच्छतीत्यत्र घटं जानातीत्यत्र द्वितीययोः परशुना छिनत्ति आत्मना वेत्तीत्यादौ तृतीययोः अयं शोभनः पुरुषः इयं शोभना रमणी अस्यास्या वा शोभनं रूपं अयमियं वा शोभनश्चलति इत्यादौ शोभनशब्दस्य चैक एवार्थ इति केनाप्यभिधातुमशक्यतया चैकविधप्रत्ययस्य क्वचिन्मुख्यत्वस्य क्वचिद्भाक्तत्वस्य कल्पनायां व्यर्थं युक्तिविरोधमाशङ्क्य "द्रव्याश्रय्यगुणवान्" इत्यादिसूत्रकारलक्षणोपरि हस्तचालनमयुक्ततममेव। एवञ्च गुणादेरगुणतया तेष्वपि सामान्यवत्त्वनियामकः कश्चन सम्बन्धोऽवश्यमुपगन्तव्यः। स चास्माभिः समवायोऽभ्युपेतः इति सुधीभिरेवापक्षपातिभिरेव विवेचनीयम् ॥

अथ कालस्य दिशश्चाकाशेऽन्तर्भावः समालोच्यते ॥

"वस्तुशक्तिरेवैतादृशी यत् किञ्चिदेव कुत्रचिदुपनीयते न सर्वं सर्वत्र इति भाष्यम्" ॥

नन्वाकाशेनान्यथासिद्धत्वं कालस्य कथं प्रतिपादयितुं शक्यते अन्यथाऽनुपपद्यमानानामनेकेषां प्रत्ययव्यवहाराणां जागरूकत्वात्। तथाहि भावकार्य्यजातं त्रिविधकारणजन्यमिति स्थितिः। यूनि स्थविरमपेक्ष्यापरत्वं स्थविरे युवानमपेक्ष्य परत्वं यदुत्पद्यते ते गुणाविति भवताऽप्यभ्युपगतं तयोः प्रत्येकमसमवायिकारणेन केनचिद् भवितव्यं। तच्च कालेन सह पिण्डस्य संयोग एव वाच्यस्तथा च तदाधारतया कालः सिद्ध्यति ॥ कालः परापरव्यतिकरयौगपद्यचिरक्षिप्रप्रत्ययलिङ्गे निमित्तं। स कालः सर्वकार्य्याणामुत्पत्तिस्थितिविनाशहेतुः तद्व्यपदेशात् क्षणलवनिमेषकाष्ठाकलामुहूर्त्तयामाहोरात्रार्द्धमासमासर्त्वयनसंवत्सरयुगकल्पमन्वन्तरप्रलयव्यवहारहेतुः। तस्य गुणाः सं-

ख्यापरिमाणपृथक्त्वसंयोगविभागाः काललिङ्गाविशेषादेकत्वं सिद्धम् इत्यादि प्रशस्तपादभाष्यम् । काललक्षणमाह काल इति । अत्र परापरेति–भावप्रधानो निर्देशः परत्वापरत्वयोर्व्यतिकर इत्यादिका । तस्माद्विशेषगुणवत्त्वाविशेषे पृथिव्यादीनामव्यापकत्वात् परत्वाद्यकारणत्वं व्यापकत्वाद्वाऽस्माकाशयोस्तत्कारणत्वम्भविष्यतीति को विरोधः । न आकाशस्य स्वप्रत्यासत्तिमात्रेण संयुक्तसमवायित्वं धर्म्मम-न्यत्र संक्रामयितुमसमर्थत्वात् तथात्वे चैकत्र भेर्यामभिहतायां सर्व्वभेरीषु शब्दोत्पत्तिप्रसङ्गात् सूर्य्यक्रियावच्छेदेरीसंयोगस्यापि संयुक्तसमवायाविशेषात् कालस्य तत्स्वभावत्वाददयमदोषः । असिद्धिदशायां प्रसङ्गस्याश्रयासिद्धेः सिद्धिदशायाञ्च बाधितत्वात् । आत्मनोऽपि द्रव्यान्तरधर्म्मेषु द्रव्यान्तरावच्छेदाय स्वप्रत्यासत्त्यतिरिक्तसन्निकर्षापेक्षित्वात् अन्यथा वाराणसीस्थेन नीलेन पाटलिपुत्रस्थस्य स्फटिकमणेरुपरञ्जनप्रसङ्गात् । कालस्य तु विप्रकृष्टक्रियोपसंक्रमणतयैव सिद्धेर्नाऽयं प्रसङ्गः इत्यवधातव्यम् । तदयं प्रमाणार्थः स्थविरादौ परत्वं तपनपरिस्पन्दविप्रकर्षबुद्धिजन्यं तदनुविधायित्वात् कुविन्दपटवत् ते च परिस्पन्दाः स्थविरादिशरीरप्रत्यासत्तिमपेक्षन्ते स्वभावतोऽप्रत्यासन्नत्वे सति तदवच्छेदकत्वात् पटावच्छेदकमहारजनरागवत् । सा च प्रत्यासत्तिर्द्रव्यकृता प्रकारान्तरासम्भवे सति प्रकारान्तराभावे सति प्रत्यासत्तित्वात्, पटावच्छेदकमहारजनप्रत्यासत्तिवत् । अन्यथा प्रत्यासत्त्यभावे सन्निकर्षविप्रकर्षयोरसम्भवात् । अपेक्षणीयानुपपत्तौ परत्वाद्यनुत्पत्तिप्रसङ्गेन तद्व्यवहारलोपप्रसङ्गः । तच्च द्रव्यमितरेभ्यो भिद्यते विशिष्टपरत्वानुमेयत्वात् यत् पुन-

नेतरेभ्यो भिद्यते न तदेवं यथा पृथिव्यादीति । एतेना-
परत्वं लिङ्गतया व्याख्यातम् इत्यन्ता किरणावली । एतयोः
कथञ्चित् खण्डयितुमनर्हतया कालरूपद्रव्यस्य व्यवस्थापि-
तत्वात् अभिनवभाष्येऽभिहितं कालस्य गगनेनान्यथासिद्ध-
त्वं गगनायमानं कथं प्रकृष्टधिषणानां धिषणकल्पानां धि-
षणामधिरोढुमीष्टे । अथाकाशस्य स्वसंयुक्तसमवेतधर्म्मस्या-
न्यत्र संक्रामकत्वे एकस्यां भेर्य्यामभिहतायां सर्व्वभेरीषु शब्दो-
त्पत्तिप्रसङ्गरूपो यो दोषः स तु कालस्य तथात्वेऽपि समा-
नः इति स्वभाव एव भवता शरणीकरणीयस्तथा मया-
पीति चेन्नाचार्य्योक्तं भवता नावधारितं यतः । तथाहि त-
त्तत्पिण्डेषु तपनक्रियासंसर्गमन्तरेण तज्ज्ञानाधीने परत्वा-
परत्वे नोत्पत्तुमर्हतः । तथा च सर्व्वमूर्तैसंयोगितपनक्रियासं-
क्रमणस्वभावः कालः कल्प्यते तस्यानङ्गीकारदशायामुक्ता-
पत्तिराश्रयासिद्ध्या नोपपद्यते अङ्गीकृते तस्मिन् बाधितत्वा-
दुक्तापत्तिर्नोपपद्यते इति । ननु मयाप्याकाशस्तत्स्वभाव
एव स्वीक्रियते इति समान एव दूषणसमाधाने इति चेन्न
पृष्टो भवान् व्याचष्टां किमन्यस्य धर्म्ममन्यत्र संसर्जयि-
तुमेवाकाशोऽङ्गीकृतोऽथवाऽन्यथानुपपद्यमानं किञ्चित् प्रयो-
जनं तदङ्गीक्रियते । न तावदाद्यं प्रयोजनन्तदङ्गीकारे तद्वि-
नाऽपि तस्याङ्गीकर्त्तव्यत्वात् । तथा चान्यथानुपपद्यमानेन
प्रयोजनेनाङ्गीकारिते तस्मिन् स्वसंयुक्तसमवायिधर्म्मस्यान्य-
त्र संक्रामकत्वस्वाभाव्येऽङ्गीकृते भवत्येवोक्तापत्तिरिति वि-
वेचकैर्विवेचनीयम् । श्रीमदुदयनाचार्य्येण स्वसंयुक्ततपनकर्म्म-
णस्तत्तत्पिण्डे संक्रामकत्वं यथाकाशस्य तथात्मनोऽपि वि-
भुत्वात् सम्भाव्यमानमाशङ्कविषया युक्त्या तयोर्द्वयोरेव

तत्त्वं निराकृतम् । अभिनवभाष्यकारस्त्वेवमवोचत् यदन्यधर्म्मस्यान्यत्र संक्रामकत्वञ्चेतनस्य नोपपन्नं स्यादचेतनस्यैव तादृशः स्वभावो दृष्टोऽयं वायौ यदन्यस्य धर्म्मगन्धमन्यत्रोपनयति सः । तत्र सुधीभिरेव भाष्यकार एवं पृच्छयतां यद्भाष्यकारेण वायौ अन्यत्रान्यधर्म्मसंक्रामकत्वं दृष्टं तत् किं पृथिव्या गन्धं जलादौ संक्रामयति वायुरिति । तदा तु लोकोत्तरन्दर्शनमिदं यतः केनापीदं न दृष्टं आचार्य्येण स्थूलधियैव चेतनस्य तथात्वमाशङ्कितमिति वक्तव्यं । श्रीमता रघुनाथशिरोमणिनाऽपि अन्यत्रान्यधर्म्मसंक्रामकत्वं वायौ न द्रष्टुं शक्तं यतस्तेनापि स्वनिबन्धे पदार्थतत्त्वनिरूपणाख्ये निबन्धे दिक्कालयोरीश्वरानतिरिक्तत्वमभिहितवता चेतनस्य तत्त्वं न सम्भवत्यचेतनस्यैव तत्त्वं वक्तुमर्हमिति नाभ्यूहितम् । एतदप्यभिनवभाष्यकारस्य बुद्धिकौशलं यत् केषामपि बुद्धिगोचरतां नाप्नोति तत् स्वनिर्म्मिताभिनवभाष्ये व्यवस्थापयति यस्य वैभवात् इत्यलमनल्पजल्पेन ॥

"सामान्यं विशेष इति बुद्ध्यपेक्षम्" ॥ एतत्सूत्रार्थव्यवस्था समालोच्यते ॥

समानानां भावः सामान्यमन्यो भावः सामान्यस्य तस्याऽप्यन्यस्तस्याऽप्यन्य इत्यव्यवस्था बुद्धेः प्राप्नोति सामर्थ्याद्व्यवतिष्ठते इति भाष्यम्" ।

अत्रेदं पृच्छयते अङ्ग किं सामर्थ्याद्व्यवतिष्ठत इति यद् सामर्थ्यमुच्यते भवता तन्निर्व्वचनीयमनिर्वचनीयं वा आद्ये तस्यानिर्वचनान्न्यूनता ऋषेः । न च मया ऋष्युक्तेन गुणोद्देशसूत्रस्थचकारेण शक्तेः समुच्चितत्वान्न न्यूनता इति वाच्यम् तस्या अग्रे निरस्यत्वात् । एवं सामान्यरूपपदार्थान्तरकल्पनमन्तरेणाने-

केषु समानाकारा बुद्धिर्नोत्पत्तुमर्हसतो येषु येषु समाना बुद्धिरुदेति तेषु अर्थान्तरभूतस्य सामान्यस्य परिकल्पने कृते चोदकपयसोः संसृज्यमानयोर्द्रव्यगुणयोरन्येषु च केनचिद्रूपेण समानबुद्धिनिग्राह्येषु भावेष्वर्थान्तरभूतानां सामान्यानां परिकल्पनं प्राप्नोति इति यदापादितम्भवता सर्वमेतद्वाक्छलमात्रं नेपालादागतोऽयं नवकम्बलवत्त्वादित्यादावसिद्ध्युद्भावनवत् । तथाहि विशिष्टबुद्धयः सर्व्वाः विशेष्यं किञ्चित् किञ्चिच्च विशेषणं गोचरीकुर्व्वत्योत्पद्यन्ते यथेदं द्रव्यं पृथिवी गन्धवतीत्याद्याकारिकाः तास्वतद्वति विशेष्ये तद्विशेषणमवगाहते या सा मिथ्याज्ञानं भ्रमः या तु तद्वद्विशेष्ये तद्विशेषणमवगाहते सा तत्त्वज्ञानं प्रमेत्यभिधीयते । एवञ्चोदकपयसोः संसृज्यमानयोः कीदृश्या बुद्धेरनुरोधेन सामान्यान्तरकल्पनमापद्यते तत्रेदं पयः किंवेदमुदकमित्याद्याकारिकाभ्यो बुद्धिभ्यो विलक्षणां कीदृशीं बुद्धिमनुरुध्य सामान्यान्तरकल्पनमापतेत श्रीमतः । एवं द्रव्यगुणयोर्यदि काश्चित् समाना बुद्धयोऽप्युत्पद्येरन् तासामपि सामान्यमर्थान्तरमन्तरेणैव चरितार्थताऽभविष्यत् । एवं समानानां भावः सामान्यं तस्यापि भावोऽन्यस्तस्याप्येवमिति क्रमेणाऽव्यवस्थोद्भाविता सा वा कस्य हेतोः ? भवता किं सामान्यपदात् तलौ भाव इत्यनुशिष्टत्वादिप्रत्ययो नेष्यते एवं सामान्यत्वशब्दादपि । तथा च भवदुक्तानवस्थायाः कथन्न दुरवस्थापत्तिः । न च तादृशः प्रत्ययो न प्रतिषिध्यतेऽपि तु भावप्रत्ययान्तेन समानशब्देन यथाऽखण्डाः केचिद्धर्म्माः यथायथं द्रव्यगुणकर्म्मसमवेताः प्रतिपाद्यमाना भवद्भिर्मन्यन्ते तथा भावप्रत्ययान्तेन सामान्यशब्देन प्रतिपाद्यमानः कश्चित्तादृशो मन्यतामेवं क्रमेणानवस्था-

स्यत इति वाच्यम् यतोऽर्थान्तरं सामान्यमृषिणा कण्ठत एवोपदिष्टं युक्त्या व्यवस्थापयद्भिर्निबन्धृभिः सामान्यशब्दो योगरूढो मन्यते तेनाभिमता अखण्डा अर्थान्तरभूता यथा-यथं द्रव्यगुणकर्मसु समवेता धर्मविशेषाः सामान्यत्वेन प्रतिपाद्यन्ते भावप्रत्ययान्तेन तेनापि तदितरावृत्तित्वसकल-तद्वृत्तित्वाभ्यां नित्यत्वे सत्यनेकसमवेतत्वरूपं सामान्यत्वम् । एवं क्रमेण भावप्रत्ययान्तेन तेन तेन प्रत्यायनेऽप्यनवस्थायाः क्व प्रसङ्गः । अथानेकेषु सामान्येषु समाना बुद्धिरनुगतत्वेन भवतामनभिमतेनापि सामान्यत्वेन निर्वाहयितुं शक्यते भवद्भिः । द्रव्यगुणकर्मसु समाना बुद्धिरनुगताखण्डाद्धर्मान्तरादृते अस्माभिर्निर्वाहयितुं न शक्येति किमाज्ञा बोढव्या भवतामिति चेव सत्यमूहितं भवता यतोऽस्माभिरेवं मन्यते परस्परं भिन्नेषु समाना बुद्धिः कश्चिदनुगतं धर्मन्तेषु विषयीकृत्यैवोत्पद्यते नान्यथाऽतो द्रव्यगुणकर्मसु तदनुरोधेन सामान्यमङ्गीक्रियते सामान्यादौ स्वारसिकी तादृशी बुद्धिरेव नास्ति किमनुरोधेन सामान्यादौ तादृशो धर्मोऽङ्गीकरणीय इति । एवञ्चार्थान्तरं सामान्यं विद्विषता सामर्थ्याद्व्यवस्थास्यत इत्यभिदधता भवताऽङ्गीकृतमेव सामान्यं नाम्नि केवलमवशिष्यते विद्वेषः । एवं परिभाषातो हि समाना बुद्धिर्विशेषबुद्धिश्चोत्पद्यते इति ब्रुवता परिभाषाया अनुगतत्वमभ्युपगतम् । यत्तु यदि वै कश्चिद्गुणपरिभाषां पृथिव्यादिषु कुर्यात्तथैवास्य बुद्धिर्भवेदिति । इत्थमेव प्रतितन्त्रमभिन्नेऽप्यर्थे विभिन्ना बुद्धिरिति । इति यत् मतारणापद्धतिं प्रस्थितः प्रावोचदभिनवभाष्ये तदपि प्रेक्षावतामुपेक्षणीयतां प्राप्नोति । तथा ह्यभिन्नेऽर्थे विभिन्ना बुद्धिर्यदुच्यते भवता

तत् किं पृथिव्यादिषु गुणपरिभाषां जानानस्य तेषु गुण इत्याकारत्वेनाभिलप्यमाना याः समाना बुद्धयः उद्यन्ति तासां तेषु द्रव्यपरिभाषां संविदानस्य यास्तादृश्यो बुद्धयस्तासाञ्च मिथो विभिन्नविषयकत्वमभिमत्य । तथा सत्यात्मनः पूर्वं स्थायित्वं साधयितुं आन्वीक्षिक्यां भगवानक्षपादः "प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषादिति" यदभिहितवान् । तद्भाष्येऽपि जातमात्रस्य प्रवृत्तिलिङ्गः स्तन्याभिलाषो दृश्यते स च नान्तरेणाहाराभ्यासं कया युक्त्या दृश्यते हि शरीरिणां क्षुधा पीड्यमानानाम् आहाराभ्यासकृतात् स्मरणानुबन्धादाहाराभिलाषः । न च पूर्वशरीरमन्तरेणासौ जातमात्रस्योपपद्यते तेनानुमीयते भूतपूर्वं शरीरं यत्रानेनाहारोऽभ्यस्तः इत्यादिकं भगवान् वात्स्यायन उदितवान् तत्र जातमात्रस्यार्भकस्य स्तन्यपानाभिलाषश्चिकीर्षारूपः स च प्रवृत्त्या स्वकार्य्येणानुमीयते प्रवृत्तिश्चेष्टस्य क्षुन्निवृत्तिरूपस्य साधनताधियो भवति सा चेष्टसाधनताधीः स्मरणात्मिका । एवं भगवान् पतञ्जलिर्योगानुशासने "स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः" इत्यभिहितवान् तद्भाष्ये भगवान् बादरायणः सर्व्वस्य प्राणिन इयमात्माशीर्नित्या भवति मा न भूवं भूयासमिति । न चाननुभूतमरणधर्म्मकस्यैषा भवत्यात्माशीरित्याद्युदितवान् । तन्नैवं पृष्टो भवानुत्तरयतु पश्वप्रभृतीनां प्राणभृतामप्रकृष्टचेतनानां परिभाषां सामर्थ्यं वाऽविजानतां जातमात्राणां पूर्वशरीराभ्यस्तानेकविधमहापुरुषज्ञानेन सदृशं यज्ज्ञानं जायत इत्युक्तं चिरन्तनैस्तदसङ्गतमेव भवता वक्तव्यं यतस्तेषां केनापि तदानीं स्वकीयमुत्पद्यमानं ज्ञानमभिलपितुं न शक्यते । एवं पा-

रसीकप्रभृतीनां विभिन्नभाषाव्युत्पन्नानां जलादौ विभिन्नपरिभाषां संविदानानां जलं वह्निमुपशमयतीति बुद्धेरनुदयप्रसङ्गेन भवदुक्तशक्तिसाधकयुक्तौ जलाञ्जलिर्भवतैव दत्तः । तथा च परिभाषाभेदान्न बुद्धिर्भिद्यते सेयमर्थेऽसतीत्यादिवाण्येव भवतोऽसतीति सुधीभिर्मन्तव्यम् ॥

॥ अथ लघुत्वसमालोचना ॥

गुरुण्यपि किञ्चिदपेक्ष्य लघुत्वप्रत्ययात् गुरुत्वसामान्याभावो लघुत्वमिति वक्तुमनर्हमतो लघुत्वं गुरुत्वे प्रतिद्वन्द्वि गुणान्तरम् ।

इति व्यवस्थापितं भाष्ये भाष्यकारेण । तत्र पृच्छामः गुरुत्वसामान्याभाववति लघुत्वव्यवहारः क्व दृष्टो भवता पूर्वनिबन्धॄणां यत्ते आक्षिप्ताः गुरुत्वसामान्याभावेन लघुत्वव्यवहारो नोपपादयितुं शक्यत इत्यादिना । तैः किं गुरुत्वसामान्याभाववत्याकाशादौ लघुत्वं व्यवह्रियते इत्यवधारितम्भवता न ह्येवं केनापि निबन्धा कुत्रापि निबन्धे निबद्धं तथाच व्यर्थोऽयमाक्षेपः । अथ मया पूर्व्वतना नाक्षिप्यन्ते परन्तु प्रशस्तपादाचार्य्येण गुणसूत्रस्थचकारसमुच्चितेषु गुणेष्वनुपलब्धमन्यथाऽनुपपद्यमानप्रत्ययव्यवहारोपजीव्यमनपह्नवनीयं व्यवस्थाप्यते इति चेत् साधूक्तं श्रीमता व्यवस्थाप्यतां लघुत्वं । तदनभ्युपगमे कीदृशः प्रत्ययो व्यवहारो वा न निर्वहेत्तद्वक्तव्यम् । अयमस्माल्लघुरिति प्रत्ययः किमालम्बन इति चेत् यथाकाशादीन् परममहत आरभ्यापकृष्टमहत्त्रसरेणुपर्य्यन्तं वर्त्तमानं महत् परिमाणं नैकविधमपि तेषु तेषु द्रव्येषु महत् इति प्रत्ययव्यवहारौ निष्पादयितुमीष्टे तदा गुरुत्वमेव लघुरिति प्रत्ययालम्बनीभूय तं निष्पादयितुमीशिष्यते

इति गृह्यताम् । यदि चाकाशादिषु सर्वत्रेदं महदिति समाना बुद्धिरुत्पद्यते सा महत्त्वेन गुणेनोपपाद्यतां पृथिव्यादिषु च क्वचिदिदं गुर्विति क्वचिदिदं लघ्विति विभिन्नबुद्धिरुत्पद्यमाना विषयमपेक्षते तत्र सर्व्वासामेव गुरुत्वमालम्बनमभिदधद्भिर्लज्जा परित्यक्ता इत्यभिधीयते तदा शिलोच्चयप्रभृतिषु यन्महत्त्वं भवता मतीयते तदेव शिलास्विति कथमपि वक्तुं न पारयिष्यति भवान् तथा च महत्परिमाणगतानि कानिचिद्वैजात्यानि तत्तत्प्रतीतिविशेषान्निर्वाहयन्तीत्यस्माभिरभ्युपगम्यतेऽर्थान्तरभूतं सामान्यं पुनरप्रकृतो महती यन्त्रणा स्यात् । एवं शब्दस्यैकविधगुणत्वेऽपि कुत्रचित्तारः क्वचिन्मन्द इति प्रत्ययव्यवहारावपि यद्युपपद्येयाताम् । एवं कश्चन शब्दः कश्चिदपेक्ष्य तारोऽपि सन्नपरमपेक्ष्य मन्दो भवति तत्रापि यदि गुणान्तरमन्तरा ते ते प्रत्यया व्यवहाराश्चोपपादनीयास्तदा लघुत्वरूपाद्गुणान्तरादृतेऽप्ययमस्माल्लघुरिति प्रत्ययो व्यवहारश्च निर्वाहयितुं शक्यः । अथ शिलोच्चयशिलाप्रभृतिषु यद्‌ परिमाणं तत्तारतम्यं तद्गतवैजात्येनोपपादयितुं शक्यतां गुरुत्वलघुत्वाभ्यान्तु द्रव्यविशेषः परिच्छिद्यते इति वैलक्षण्यमिति चेत् तत् किं लघुत्वेन गुरुत्वशून्यं द्रव्यं परिच्छिद्यते उत गुरुद्रव्यमेव न तावदाद्यः गुरुत्वविधुरे तदप्रत्ययात् । द्वितीये तु गुरुत्वविशेषेणैव तत् परिच्छिद्यतामिति सन्तुष्यताम् । न च गुरुत्वविशेषोऽपकृष्टगुरुत्वं अपकर्षश्च भवद्भिर्जातिविशेषो वक्तव्यस्तथा चायमस्मात् पट इतिवत् अयमस्माल्लघुरिति प्रत्ययः कथम्भवितुमर्हं इति वाच्यम् वैजात्यापरनाम्नां जातिविशेषाणां तादृशप्रतीतिनिर्व्वाहकत्वस्याङ्गी-

कर्त्तव्यत्वात् । अन्यथा शब्दादौ अयमस्मात्तारो मन्द इत्यादिप्रत्ययस्य व्यवहारस्य च सार्व्वजनीनस्य तारत्वादिकं गुणान्तरमनङ्गीकुर्वता भवताऽपि दुरुपपादत्वात् । यदि च सांख्यसप्तत्यां श्रीमदीश्वरकृष्णेन सत्त्वं लघु प्रकाशकमिष्टमित्यत्र लघुत्वं गुणान्तरं कण्ठत एवोक्तन्तत् कथं भवद्भिर्लघुत्वमपन्होतुं शक्यमित्यभिधीयेत तदाऽस्माभिः पदार्थव्यवस्थायामनावश्यकस्य तथाविधस्य सत्त्वस्यानङ्गीकर्त्तव्यत्वात् न पर्य्यनुयोगावकाश इति सुधीभिरेव विभावनीयम् ।

पृथिव्यादीनामुत्पत्तिक्रमः समालोच्यते ॥

तत्र पृथिव्यप्तेजांस्यनित्यानि द्रव्याणि नित्याण्यपराणि प्रागुत्पद्यमाना पृथिवी गन्धमात्रा प्रकृतेरुत्पद्यते पूर्वमस्या आपो रसमात्रा इत्यादि भाष्यम् ॥

त इमे गन्धादयः पृथिव्यादीनां नैजा गुणाः कारणगुणप्रक्रमात्तु शब्दादयो वाय्वादिषु इति च भाष्यम ॥

तत्र पृष्टो भवान् व्याहरतु आन्वीक्षिकीसमानतन्त्रत्वेन लोके प्रख्यातस्य वैशेषिकतन्त्रस्य विषयव्यवस्था यदि भगवता वात्स्यायनेन स्वनिर्म्मितान्वीक्षिकीभाष्ये व्यवस्थापितानर्थान् विरुध्यतोऽर्थानविषयीकुर्य्यात् तदा कथं न सा विद्वद्वर्गेणा नाहेलुब्धुं तथा ह्यान्वीक्षिकीभाष्येऽत्ययविसाधनप्रस्तावे पार्थिवादयः परमाणवो नित्या अभिहितास्तैरेव द्व्यणुकादिक्रमेण महापृथिवीरूपादीनि यावन्ति कार्य्यद्रव्याण्यारभ्यन्ते इति प्रतिपादितम् । एवं तत्र प्रकृतेः परमेश्वरशक्तेर्नामाऽपि नोल्लिखितं वैशेषिकतन्त्रेऽत्यन्तमादरणीये प्रशस्तपादाचार्य्यभाषितभाष्ये चतुर्णां महाभूतानां सृष्टिसंहारविधिरुच्यते ब्राह्मयेण मानेन वर्षशतस्यान्ते वर्त्तमानस्य ब्रह्मणोऽपवर्गकाले संसारे खि-

न्नानां प्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य संजिहीर्षासमकालं शरीरेन्द्रियविषयमहाभूतोपनिबन्धकानां सर्वात्मगताद्दृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्संयोगजकर्म्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यस्तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः । तथा पृथिव्युदकज्वलनपवनानां अपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिंश्च सति पूर्वपूर्वस्य विनाशः ततः प्रविभक्ताः परमाणवोवतिष्ठन्ते धर्म्माधर्म्मसंस्कारानुविद्धाश्चात्मानः तावन्तमेव कालं । ततः पुनः प्राणिनां भोगभूतये महेश्वरस्य सिसृक्षानन्तरं सर्व्वात्मगतलब्धवृत्त्यदृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्म्मोत्पत्तौ तेषां परस्परसंयोगे द्व्यणुकादिक्रमेण महान् वायुः समुत्पन्नो नभसि दोधूयमानस्तिष्ठति तदनन्तरं तस्मिन्नेवाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानस्तिष्ठति तदनन्तरं तस्मिन्नेव जलनिधौ पार्थिवेभ्यः परमाणुभ्यो द्व्यणुकादिक्रमेण महापृथिवी समुत्पन्ना संहताऽवतिष्ठते तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिक्रमेणोत्पन्नो महांस्तेजोराशिर्देदीप्यमानस्तिष्ठति । एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महेश्वरस्याभिध्यानमात्रात्तैजसेभ्योऽणुभ्यः पार्थिवपरमाणुसहितेभ्यो महदण्डमारभ्यते तस्मिंश्चतुर्वदनकमलं सर्व्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे विनियुङ्क्ते । स च महेश्वरेण विनियुक्तो ब्रह्मा निरतिशयज्ञानवैराग्यैश्वर्य्यसम्पन्नः प्राणिनां कर्म्मविपाकं विदित्वा कर्म्मानुरूपज्ञानभोगायुषः सुतान् प्रजापतीन् मानसान् मनुदेवर्षिपितृगणान् मुखबाहूरुपादतश्चतुरो वर्णा-

नन्यानि चोच्चावचानि भूतानि सृष्ट्वा आशयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयतीति एवमभिहितम्। तेऽमी पृथिव्यादयः शरीरेन्द्रियविषयानारभमाणाः किमविच्छेदेनाहोस्विद्विच्छेदेन इति यदापि विच्छेदेनारभन्ते तदाऽपि किमेत एव किं वाऽदृष्टमप्यपेक्षन्ते यदाऽदृष्टमपेक्षन्ते तदा किमनधिष्ठिताः किं वा केनाऽप्यधिष्ठिताः इति। कश्चात्र विशेषः अविच्छेदे तद्वचनादाम्नायप्रामाण्यमिति व्याकुप्येत लोकसन्तत्यविच्छेदे वेदसम्प्रदायस्याप्यविच्छेदात्। विच्छेदे वाऽऽद्यव्यवहारविलोपप्रसङ्गः मूलाभावात्। एत एवेति पक्षे वैचित्र्यानुपपत्तिः एषां साधारणत्वात्। अदृष्टापेक्षायां सर्व्वादृष्टवृत्तिनिरोधे कार्य्यानुत्पत्तिप्रसङ्गः। अदृष्टानां प्रथमवृत्तिलाभे कारणाभावात्। अनधिष्ठितानां प्रवृत्तौ अचैतन्यानुपपत्तिः प्रवृत्त्यनुपपत्तिर्वा अचेतनप्रवृत्तेः पराधिष्ठानकार्यत्वानियमात्। अधिष्ठाने च नास्मदादीनामुपादानाद्यनभिज्ञत्वात्। नेतरस्य प्रयोजनाभावात् इति समाकुलितान्तेवासिनः समाश्वासयन्नाह चतुर्णामिति। सृष्टिसंहारयोः सर्गप्रलययोः विधिः प्रकारो द्व्यणुकादिक्रमेण सृष्टिः क्रियाविभागादिन्यायेन परमाण्वन्तः प्रलय इति कथ्यते सृष्टिसंहारयोरनिर्देशप्रथमतां प्रतिपादयितुं सृष्टिक्रममुपक्रम्य संहारक्रमं व्युत्पादयति ब्राह्मेणेतीत्यादिना। परार्थप्रवृत्तेन परमेश्वरेणाधिष्ठितैः पृथिव्यादिभिर्विश्वमारभ्यत इति वदता सर्व्वे पूर्व्व एवाक्षेपाः परिहृता बोद्धव्याः। तथाहि विच्छेदे आम्नायप्रामाण्यमूहेत् मानससम्प्रदायादिदृष्टया चाद्यव्यवहारमुपपादयेत्। अदृष्टापेक्षया वैचित्र्यं समर्थयेत्। परार्थप्रवृत्त्या निष्प्रयोजनत्वशङ्कामुत्सारयेत्। परमेश्वराधिष्ठानेनाचैतन्यप्रवृत्तिनियमौ

च मन्यादृषेत् इत्यनेन प्रकरणेन । व्याख्यातञ्च शिर-
पादवतां सर्वशास्त्रपारावारपारीणेन श्रीमदुदयनाचार्येण
तैस्तु व्यावहारिकपारमार्थिकयोर्नामाऽपि नोच्चारितम् । एवं
गन्धमात्रादीनामपि । एवञ्च तेषां पदार्थव्यवस्थापनमनाह-
त्याशुनावनस्यालङ्कारकाङ्क्षारङ्गस्यादिसहस्राधिपस्यापि पूर्व-
वर्तैश्चापिनाथैर्निरन्वकारिव्यवस्थापितपदार्थान् विरुन्धत् पदार्थनि-
र्वचनं अस्मादृशोऽपि वयं न श्रद्दधीमहि । न च तैर्व्यवहा-
रभूमिपारमार्थिकभूमी अवलम्ब्य न व्याख्यानं वैशेषिकतन्त्र-
मतो न केनापि व्याख्यानव्यापि किं विधिर्वा तस्यातिक्रमे
पातकमापद्येत वक्तव्यं यतस्तन्त्रकर्तुरभिप्रेतार्थो व्याख्या-
तृभिर्वर्णयितव्यावर्णनीया यथा ते व्यवस्थिताः सूत्रतन्त्रे वस्तुत्-
सिद्धान्तो वैशेषिकाणां नान्याऽन्यो विषयविकल्पो माभूत्, अनु-
पादेयव्याख्यानतया भवतस्तूपादेयमपवाद व्यर्थवदिक्रमः इत्ये-
वास्माभिरुच्यते । यथा यदि कश्चित् मैथिलान् साध्याभावव-
दवृत्तित्वमिति चिन्तामणिग्रन्थे हे साध्य हे अभाव इत्यादि-
क्रमेण काश्चिदभिनायं योजयित्वा व्याचक्षीत चिन्तामणिग्रन्थ-
कर्तिताधार्थं विद्वद्भिरवश्यमुपेक्षणीयव्याख्यो भवेत् इति
भवानपि अनुसंधत्ते । अथ भगवतः सूत्रकारस्याभिप्रेता
अर्थाः सूत्रव्याख्यया व्यवस्थापनीया इत्यविवादं किन्तु भग-
वतोऽभिप्राय एव केन निर्णीतो यथार्थं सूत्राक्षराणि प्रम-
न्वितार्थानि स्युः । स एव भगवतः सूत्रकृतोऽभिप्रेतोऽर्थो
इत्यवधारणाय किं प्रमाणमिदम् । एवञ्च मया योजितेषु
सूत्राक्षरेषु कश्चिदर्थाभिसन्धियुक्तेषु भवद्भिर्दर्शितेषु स्वयमेव
तदैवानुपादेयनिर्वचनं मे वस्तुस्वारस्यमिति । अन्यथा सम्प-
त्तिः भवतोऽस्मत्तो वस्तुस्वारस्यदर्शीति चेदस्तु तावदेवं

सूत्राक्षराणां समन्वितार्थकत्वमेव विचारणीयम् । दृश्यतान्तावत् "परिशेषाल्लिङ्गमाकाशस्य" इत्येतत्सूत्रे शब्दलिङ्गेनाकाशानुमाने भगवतः सूत्रकारस्य तात्पर्य्यं शब्दस्य गुणतया तदाश्रयो द्रव्यमाकाशनामकं सिद्ध्यति इति भवता व्याख्यातमपि तथा च शब्दाश्रयतया यदाकाशः साधितः तत् किं शब्दाश्रयतयाऽभिमन्यमान आकाशः साधितः किं वा वस्तुगत्या प्रथमे शब्दस्य वास्तविक आधारः कोऽपि वक्तव्यो भवेत् । अन्त्यश्चेदोमिति ब्रूयात् । तदा शब्दलिङ्गेन परमार्थभूमावपि यदि शब्दाश्रय आकाशः सिद्धो भवेत् तदा "सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानीति" सूत्रे सुखदुःखादीनां गुणत्वेन तदाश्रयद्रव्यस्यानुमिमापयिषयैव तेषां लिङ्गत्वमभिहितवान् भगवान् सूत्रकारः इत्यवश्यमनिच्छताऽपि जीवे गुणम्भवताऽङ्गीकरणीयं । तथा च परमार्थभूमावात्मनो न सुखाद्याश्रयत्वं किन्त्वन्तःकरणस्थान् गुणान् स्वात्मनि अभिमत्य गुणवानिव भवति । अतो द्रव्यमिति व्यवहारभूमावुच्यते इत्यादिः स्वभावितभाष्योक्तिः कथं नासमन्वितार्थिकेति । एवं परस्यात्मनोंऽशभूता जीवा वह्नेरिव विस्फुलिङ्गा इत्यादि वचनं वा कथं समन्वितार्थकं मन्तुं शक्यते । तथा ह्यंशिनि वर्तमानतयाऽभ्युपगन्तुमनर्हं सुखादिकमंशेषु वर्त्तमानतयाऽभ्युपगन्तुं नोचितमित्येतावान् मयासोऽवलम्बितो भवता । तथापि आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गमित्येतत्सूत्रेणाणुरूपस्य मनसो भगवता सूत्रकारेण व्यवस्थापिततया तदीयैर्गुणैरतीन्द्रियैरेव भाव्यं कथन्तैरात्मसाधनमभिप्रेत्य भगवान् सूत्रकारः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानीति सूत्रयाञ्चकारेति । ननु तेषामन्तःकरणधर्म-

त्वे आत्मसाधने लिङ्गत्वं कथं व्याहृतमिति चेत् न पूर्वमभिहितत्वात् । तथा हि शब्दस्य श्रवणग्राह्यस्य गुणत्वेनाश्रयद्रव्यसाधकत्वं यथा तथैव सुखादीनां गुणानां प्रत्यक्षाणामाश्रयद्रव्यसाधकत्वमित्यभिप्रेत्यैव भगवान् सूत्रकारस्तेषां लिङ्गत्वमभिहितवान् इति । किञ्च सूत्राक्षरयोजना यथा तथास्तां भवतोऽद्वैतमतं श्रद्दधुषः स्वस्य निरतिशयविद्वत्ताख्यापयिषयाऽद्वैतमताविरोधेन वैशेषिकन्तन्त्रं व्याचिख्यासोः किञ्चिच्छिन्द्यात् किञ्चिद्भिन्द्यादिति रीत्या सूत्राक्षराणि योजयाञ्चक्रुषोऽपि अभीष्टसिद्धिप्रत्याशा मूषिकभक्षितबीजादङ्कुरजननप्रत्याशामनुहरति । तथा हि आत्माद्वैतं भगवतः सूत्रकारस्याभिप्रेतं "सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम्" "व्यवस्थातो नाना" एतत्सूत्रद्वयादवधार्य सूत्रे पूर्वतनभाष्ये तट्टीकादौ च कथमप्यनुल्लिखितनामानौ व्यवहारभूमिपरमार्थभूमी आश्रित्याकाशादीनां व्यवहारभूमौ नित्यत्वं परमार्थतोऽनित्यत्वमिति स्वकीये भाष्ये व्यवस्थापयाञ्चकार । तथैतत्सूत्रद्वयभाष्ये चैकात्म्यमेव सिद्धान्तयाञ्चकार भवान् । तत्र प्रथमन्तावदेतद्विचार्यतां शब्दालिङ्गाविशेषाद्यथाकाशमेकं साधितं तथैवात्माऽपि स्यादित्यैकात्म्याशङ्कनं व्यवस्थातो नानेति समाधानम् । अत्र परमेश्वरो न प्रकृतो येन तद्द्वितीयत्वमात्मसु वक्तव्यं स्यात् । न चात्ममात्रस्य प्रकृतत्वात् कथं परमेश्वरो न प्रकृत इति वाच्यं सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि इत्यन्तसूत्रेण यत् सुखादेर्लिङ्गत्वमुक्तं तत् किं परमात्मन्यपि सम्भवेत् यत्तत्रात्मपदस्यात्ममात्रपरतया परमात्मनोऽपि प्रकृतत्वमूह्येत । न च तत्रात्मपदस्य जीवपरत्वेऽपि का क्षतिः । जीवानामेकत्वे सा-

भिते परमेश्वरादप्यभेदोऽर्थात् सिद्ध इति सूत्रकारस्याशय इति वाच्यं परमात्मनो जीवानामभेदो भगवतः सूत्रकारस्याशयस्थ इति वक्तुन्तदा शक्येत यदि भगवता सूत्रकारेण सुखदुःखेच्छेत्यादिसूत्रं न प्रणीयेत । एवञ्च भगवतः सूत्रकारस्याभिप्रायमनवगत्यार्थं व्यवस्थापयाञ्चकार भवानित्यवश्यमभिधास्यामहे वयम् । अथ सुखदुःखेच्छाद्वेषेत्यादिसूत्रप्रणयनादेव परमेश्वराभेदो जीवात्मनि भगवतः सूत्रकारस्य प्रतिपादनानर्हः कथन्तत् प्रदर्शनीयमिति चेत् अवधीयतां तावत् प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानीत्येतत्सूत्रोक्तानि शरीरे आत्मास्तित्वानुमापकान्येव लिङ्गानि सूत्रकृतोऽभिमेतानि भवताऽप्येवं व्याख्यातानि इति कथं परमेश्वरपरता तद्वात्मपदस्य शक्यवचना भवेत् । एवं सुखदुःखादेर्गुणतया तदाश्रयद्रव्यं सिषाधयिषन्नपि शब्दस्याकाशसाधने लिङ्गत्वमिव सुखादेर्लिङ्गत्वमभिप्रेयाय भगवान् सूत्रकारः । तथा च सुखाद्याश्रयद्रव्ये परमात्मानमन्तर्भावयिष्यति कथम्भवान् । अथ सुखादिकमात्मसु मया न मन्यते किन्त्वन्तःकरणगतन्तत् स्वनिष्ठत्वेनाभिमन्यते तैरित्येव मन्यते । तथा च सुखदुःखाश्रयाभेदः परमात्मनि कथं शक्योवगम इत्यस्य नावकाश इति चेत् नानुमन्यतां सुखादिकं संसारिष्वात्मसु भवता भगवता सूत्रकृता त्वनुमेने तत्तेषु । तथाहि आत्मान्तरगुणानामात्मान्तरगुणेऽकारणत्वादिति यद्भगवान् सूत्रकारः प्रावोचत तस्यात्मान्तरगुणत्वेनाभिमन्यमानानामेतादृशीं व्याख्यां भवदभिमतां सूत्रकारोऽभिप्रेयायेति वचः के वा कृतधियः श्रद्दध्युः । ब्रवीतु वाऽन्तःकरणस्यैव धर्म्माः सुखादय इति तथा सत्यनपह्नवन्तेषां

प्रत्यक्षत्वं भवता कथमुपपाद्यताम् । तथाहि प्रत्यक्षे महत्त्वस्य हेतुभावो भवताऽप्यभ्युपगतो मनसि तु महत्त्वं भवतोऽपि न शक्यवचनं । सूत्रकारेण ज्ञानायौगपद्योपपिपादयिषया परमाणुस्वरूपस्य तस्य कण्ठत एवाभिहितत्वात् । नन्वद्वैतवादिमते आत्मनां ब्रह्माभेदेऽविवादात् तेष्वभ्युपगन्तुमशक्याः सुखादयः प्रत्यक्षा एव नान्तःकरणधर्मत्वात्तेषामित्येव किम्भवद्भिर्वक्तव्यमिति चेत् अहो अभ्यूहनं भवतः वैदान्तिकैर्हि मनसोऽणुत्वं नोच्यते अपि तु तन्मनोऽसृजतेत्यादिश्रुतिमनुरुध्यानित्यं सावयवं परिणमनस्वभावमभ्युपगतं तस्य परिणामरूपा एव सुखादयः ज्ञानन्तु ब्रह्मैव तत्तद्विषयज्ञानन्तु अन्तःकरणस्य तत्तद्विषयाकारपरिणामभूतायां वृत्तौ साक्षाज्ज्ञानात्मकस्य ब्रह्मणः प्रतिविम्बनम् तादृश्या वृत्त्याऽवच्छिद्यमानं चैतन्यमेव वा । एवञ्च नियततया पदार्थान् सूत्रयता भगवता वैशेषिकतन्त्रकृता सुखादेर्गुणत्वं मनसोऽणुत्वञ्च व्यवस्थापयाञ्चक्रे इत्यत्राविवादात् । मनोगुणत्वे सुखादेः प्रत्यक्षत्वं दुरुपपादमेव भवता इति । अपरञ्चाद्वैतवादिसिद्धान्तमवलम्ब्य वैशेषिकतन्त्रं व्याचिख्यासाञ्चक्रुषा भवता स्वभाषितभाष्ये आत्मानः खल्वनुपजनापायधर्मकस्य परस्पांशा वह्नेरिव विस्फुलिङ्गा अर्णवस्येव जलबुद्बुदास्तस्मात् प्रादुर्भवन्तो जायस्व म्रियस्वेति तृतीयस्थानं लब्ध्वा इत्यादि यज्जीवस्वरूपमवर्णि तत्तु नाद्वैतवादिसम्मतं प्रतिभाति यतस्तथा सति जीवस्य सादित्वं दुर्व्वारमापतेत् । ततः परमेश्वरस्य वैषम्यादिदोषोऽङ्गीकर्त्तव्यो वा कथन्न भवेत् । तथाहि यस्मिन्नहनि जीवाः प्रादुर्भूताः तत्पूर्व्वं ते नासन् ततश्च तत्सञ्चिताः कर्म्माशयास्तेषामुत्कृष्टापकृष्टदेहसम्पादनेन सुखदुःखादिक-

मुपभोजयन्ति तानिति कथं समाधास्यति भवान् । एवञ्च नियतान् पदार्थान् सूत्रयाञ्चक्रुपः पार्थिवादीन् परमाणूनभ्युपजग्मुपो मायामविद्यां प्रकृतिं वाऽनुपजग्मुपो भगवतः सूत्रकारस्याभिमेतां पार्थिवादिपरमाणुभिर्द्व्यणुकादिक्रमेण महापृथिव्यादिसृष्टिमपन्हूय शास्त्रान्तरे उल्लिखितान् पदार्थान् परिगृह्य शास्त्रान्तरेण वैशेषिकशास्त्रस्याविरोधमुपपिपादयिषता वैशेषिकशास्त्रतात्पर्य्याज्ञत्वं शास्त्रान्तरतात्पर्य्याज्ञत्वञ्च निजस्य प्रकटीकृतमिति सुधीभिरेव विभावनीयम् ॥

यदा चोत्पद्यते द्रव्यं तदानीमपि नागुणं भवति स्वाभाविकोऽयमव्यक्तोऽपि न शक्यते प्रतिवेद्धुं इत्यादि भाष्यम् ॥

यदत्र तद्द्रव्यजन्योऽपि गुणस्तद्द्रव्योत्पत्तिकालेऽपि तत्र वर्त्तेत इति स्वभापितभाष्येऽभ्यधायि भवता एतत्तु प्रतिपादितं प्रतिपाद्यमानं वा क्वापि केनापि नोपलब्धम् । यदि च सत्कार्य्यसिद्धान्तमवलम्ब्योच्यत इति वक्तव्यं तदपि वा कथं वक्तुं शक्यते तन्मते तु कस्याप्युत्पत्तिर्नोदिता । कारणव्यापारेण सत एव तस्य तस्याविर्भावमात्रं तत्सिद्धान्तिभिरुच्यते । अत्र तु यदा चोत्पद्यते द्रव्यमेवमभिधीयत इति । एवमाश्रयद्रव्यस्य तत्तद्गुणव्यति हेतुभावोऽपि न प्रत्याख्यायते उपजनधर्म्मकाणां सहेतुकत्वनियमात् इति महच्चित्रम् । पितापुत्रयोरुत्पत्तिस्त्वेकदा काऽपि न दृष्टा इति समाकुलिता वयम् । अथ भवद्भिर्न दृश्यतां हेतुहेतुमतोरेकदोत्पत्तिः उत्पत्तिकालेऽपि द्वावेको न भवतः पृथिव्यादीनि चापृथगिति स्वाभाविका गुणास्तदाऽप्यनुवर्त्तन्त इत्यनिच्छद्भिरपि भवद्भिरेपितव्यमिति चेन्नोत्पत्तिक्षणे द्वाविति प्रतीतेरनभ्युपगमात् । न च द्वावुत्प-

येते त्रय उत्पद्यन्ते इत्यादयः प्रतीतयो निरालम्बना इति भवद्भिर्मन्यते तत् किन्न चित्रमिति पितापुत्त्रयोरेकदोत्पत्तिर्न दृश्यते इत्यादिरूपो भवतामुपहासो व्यर्थ इति वाच्यं द्वावुत्पद्येते इत्यादिप्रत्ययाः प्रत्यक्षरूपा उत्पत्तिक्षणे उत्पद्यमानास्तदानीन्तत्र गुणसत्त्वमुपलम्भयन्ति किम् । अथवा क्षणान्तरे जायमानाः । तत्र नाद्यः पक्षः यत उत्पत्तिक्षणे द्रव्यस्य प्रत्यक्षमसम्भवदुपपत्तिकं तथाहि इन्द्रियसन्निकर्षमन्तरेण प्रत्यक्षं न कस्याऽप्यनुमतमुत्पत्तेः पूर्वं यदि विषयद्रव्यमिन्द्रियेण सन्निकृष्येत तदैवोत्पत्तिक्षणे द्रव्यस्य प्रत्यक्षं सम्भवेत् उत्पत्तेः पूर्वन्तु अनुत्पन्नो विषयः कथमिन्द्रियेण सन्निकृष्येत तथा चोत्पत्तिक्षणे जायमानं प्रत्यक्षमेकदा गुणगुणवतोस्तत्त्वं नानुरुणद्धि इति । अथ द्वावुत्पद्येते त्रय उत्पद्यन्ते इत्यादिप्रत्यया एवापलप्यन्ते भवद्भिः किं वा ते स्वीक्रियन्ते । आद्ये सर्वजनीनान् प्रत्ययानपलपतां वचः के वा प्रेक्षावन्तः श्रद्दधति । द्वितीये तेषां किमालम्बनं वक्तव्यमिति चेत् सत्यं यदा द्वयोस्त्रयाणां वा सामग्रीसमवधानमनुत्पन्नेऽपि तादृशद्रव्येषु ते प्रत्यया उत्पद्यन्ते तेषामनुत्पन्नद्रव्यांशे उपनयजन्यत्वाङ्गीकारात् । यथाऽत्र घटो भविष्यतीति प्रत्यक्षेणाऽनुत्पन्नोऽपि घट आलम्ब्यते तथैव द्वावुत्पद्येते इत्यादिप्रत्ययैरपि अनुत्पन्नद्वित्वादिगुणकं स्वयमप्यनुत्पन्नं द्रव्यमालम्ब्येतेति नानुपपत्तिरिति । एवं रूपरसस्पर्शगन्धादीनां समवायिकारणद्रव्योत्पत्तेरनन्तरक्षणे उत्पत्तिसम्भवेऽपि द्वित्वादीनां पुनरपेक्षाबुद्धिसापेक्षोत्पत्तिकानामाश्रयोत्पत्तिद्वितीयक्षणेऽपि कथञ्चिदप्युत्पत्तुमनीशत्वेन तेषामाश्रयोत्पत्तिसमका-

लोत्पत्तिशङ्का भवतः कथमुत्पन्नेति वयं शङ्कामहे । अथ द्रव्ये तदुत्पत्तिक्षणे यदि केऽपि गुणा न स्युस्तदा तदानीं तद्द्रव्यं न व्यवह्रियेत तत्र नियामकस्य द्रव्यलक्षणस्य गुणवत्त्वरूपस्य तदानीन्तनाप्रवृत्तेरिति चेत् सत्यमभिहितम्भवता परन्तु पाचकलक्षणं यदि तस्य शयनकाले प्रवर्तेत मृत्यलक्षणन्तस्य विवाहकाले प्रवर्तेत परमेश्वरलक्षणं जगतो जन्मास्थितिलक्षणं प्रवर्तेत तदा द्रव्यलक्षणमुत्पत्तिसमये गुणविधुरेऽपि प्रवर्त्ततामित्यलमनल्पजल्पनेन ॥

आकाशकालदिगाख्यमेकं द्रव्यं । परतो निर्दिष्टाया दिश उपाधिभेदाद्व्यपदेशवचनेनैव कालाकाशयोरपि तथैव व्यपदेशभेदं मन्यते सूत्रकार इति भाष्यम् ॥

एकमेव द्रव्यमाकाशं कालो दिक् चेत्यतिरिक्ताकाशसिद्धौ कृतप्रयत्नः सूत्रकृदुपररामेत्यपि भाष्यम् ।

यद्यप्येतद्भाष्यं कालदिशोराकाशव्यतिरिक्तत्वं श्रीमत्प्रशस्तपादाचार्योदयनाचार्यप्रभृतीनामृषिकल्पानामुक्त्या वर्द्धमानोपाध्यायपक्षधरमिश्ररघुनाथशिरोमणिप्रभृतिभिर्वेदवत् प्रमाणत्वेनाभ्युपगततया अनल्पप्रयासेनापि खण्डयितुमनर्हया युक्त्या च व्यवस्थाप्यैव समालोचितं तथापि भगवतः सूत्रकारस्याभिमतिं विज्ञाय निजभाषितभाष्ये कालदिशोराकाशव्यतिरिक्तत्वं व्यवस्थापयाञ्चकाराहमिति यत् सूत्रकृदभिमतिः प्रकटीक्रियते अनिरिक्ताकाशसिद्धौ कृतप्रयत्नः सूत्रकृदुपररामेत्यादिना तदेवालोच्यते । तत्रेदं पृष्टो भवानभिदधातु यदाकाशसिद्धौ कृतप्रयत्नः सूत्रकारः कालदिशौ न साधयाञ्चकारेति किं वा कालदिशोः सिद्धौ नानल्पं प्रयतितवानिति । तत्राद्यं न रोचयेमहि । "अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति

काललिङ्गानि । इत इदमिति यतस्तद्दिश्यं लिङ्गम्" इत्येताभ्यां सूत्राभ्यां स्पष्टतयोर्व्यवस्थापनात् । अतो द्वितीय एव पक्षोऽवलम्बनीयो भवता । तत्रेदन्तावद्विचारणीयम् । आकाशसिद्धिर्हि भगवता सूत्रकारेणैकादशद्वादशैः सूत्रैः समापिता नैवं कालदिशोः सिद्धिः । सा तु द्वित्रैः त्रिभिश्चतुर्भिर्वा समापिता तावतैव किं एकमेव द्रव्यमाकाशं कालो दिक् चेति स्वीयव्यवस्थायामाचार्यप्रवृत्तिरपि साधकतयोपन्यस्यते किं वा कारणान्तरात् । तत्र नाद्यः यतो यावतोंऽशं न पर्यवस्येत तावत् प्रयतितव्यमेवात आकाशं सिषाधयिषाश्चकाणो भगवान् सूत्रकारोऽनेकैः सूत्रैर्यत्तत् साधयाञ्चकार । तत्र शब्दस्य गुणत्वात्तदाश्रयद्रव्यं सिषाधयिषाञ्चकाणः शब्दस्य गुणत्वे आकाशमात्राश्रितत्वे च निराकर्त्तव्याः परेषां विप्रतिपत्तीर्निराकृत्य तावद्भिः सूत्रैः सिषाधयिषितमाकाशं साधयाञ्चकार । कालदिशोः सिद्धौ यानि लिङ्गानि प्रदर्शितानि तेषु विप्रतिपत्तयः परेषां नासन् अतस्तयोः सिद्धिमल्पैरेव सूत्रैः समापितवान् भगवान् सूत्रकारः । एतेनैव कालदिशोराकाशेऽन्तर्भावो भगवतः सूत्रकारस्याभिमेत इत्यवधारणमनुचितमेवेति वयं वदामः । न चाकाशे स्पर्शवन्मनोभेदो महता प्रयत्नेन साधयाञ्चक्रे भगवता सूत्रकृता कालदिशोस्तु न तथाऽतोऽनुमीयते आकाशे तेषां भेदसिद्धावेव तदभिन्नयोः कालदिशोरपि तेषां भेदोऽर्थात् सिद्ध इति भगवतः सूत्रकृत आशय इति वाच्यं यतः शब्दाश्रयतया नवमे द्रव्य आकाशे सिषाधयिषिते शब्दस्य स्पर्शवत्प्रभृतिगुणभेदसिद्धिमन्तरेण सिषाधयिषितसिद्धिर्न भवत्यतः शब्दस्य स्पर्शवन्मनःप्रभृतिगुणभेदं साध-

याञ्चकार । शब्दे तेषां गुणभेदसिद्धौ शब्दाश्रये तेषां भे-
दोऽपीव सिद्ध इति । न च शब्दाश्रयतयाऽऽकाशं सिषाध-
यिषाञ्चकारणेन शब्दे स्पर्शवतां मनस आत्मनश्च गुणा
भेदोऽनुमापितः स कालदिशोर्गुणादतः कालदिशौ ना-
काशाद्व्यतिरिच्येते इति सूत्रकृदाशयोऽवगम्यते इति वाच्यम्
यतः दिक्कालावाकाशञ्च क्रियावद्वैधर्म्यान्निष्क्रियाणि इति
पुनः सूत्रयाञ्चकुषा भगवता तयोराकाशाद्व्यतिरेकः कण्ठत
एवोक्त इति । न च तथापि "विभवान्महानाकाशस्तथा
चात्मा" इत्येतत्सूत्रेणाकाशस्यात्मनश्च विभुत्वान्महत्त्वमुक्तवान्
भगवान् सूत्रकारो न तु भवद्भिरतिरिक्तत्वेन सिषाध-
यिषितयोः कालदिशोरतोऽवगम्यते न ते व्यतिरिच्येते आ-
काशादिति वाच्यं सूत्रकाराभिप्रायानवबोधात् । तथाहि का-
लदिशौ व्यवस्थापयिषुर्भगवान् सूत्रकारः "अपरस्मिन्नपरं
युगपच्चिरं क्षिप्रमिति काललिङ्गानि इति, इत इदमिति यत-
स्तद्दिश्यं लिङ्गमित्येतत्"—सूत्रद्वयप्रणयनेनैव तयोर्विभुत्वमु-
क्तवान् पुनः कथन्तद्बुद्धिष्यतीति । तथाहि अपरस्मि
न्नपरं युगपच्चिरमित्यादिसूत्रेण कालसिद्धौ लिङ्गानि प्र-
दर्शितानि भगवता सूत्रकृता । स्थविरमपेक्ष्य यूनि यद-
परत्वमुत्पद्यते । स च गुणस्त्रिविधमेव कारणमपेक्षते तत्र
समवायिकारणं युवशरीरमसमवायिकारणं कालेन सह तच्छरी-
रसंयोगः निमित्तञ्च स्थविरशरीरसंसृज्यमानतपनकर्माण्यपेक्ष्य
तच्छरीरसंसृज्यमानेषु तपनकर्मसु अल्पीयस्त्वज्ञानम् । एतञ्च
तपनकर्मणान्तच्छरीरे संसर्गः स्वसंयुक्ते द्रव्ये स्वसंयुक्तसमवे-
तधर्मसंक्रामकत्वस्वाभाव्येन द्रव्येण सम्पादितः तस्य द्रव्यस्य
तादृशः स्वभावोऽविभुत्वेऽनुपपन्नस्तस्य विभुत्वं बोधितवान् ।

एवं "गुणैर्दिग्व्याख्याता, कारणे कालः।" इत्येतत्सूत्राभ्यां कालदिशोरपि विभुत्वमहत्त्वे कण्ठत एवोक्ते भगवता। तथा च सूत्रकृता कण्ठत एवोक्तं दिक्कालयोराकाशाद्व्यतिरिक्तत्वमपन्हुवानस्य भवतः स्वोक्तभाष्ये पदार्थव्यवस्थायां दिक्कालयोराकाशाव्यतिरेकपरायां सूत्रकाराभिमतिप्रकटनमविद्याविजृम्भितमिति प्रतीमः॥

इदानीं सदकारणवन्नित्यमित्यादिसूत्रभाष्यमालोच्यते॥

यत् सदकारणवच्च भवति तन्नित्यमाख्यायते। सद्धि नात्यन्तमुच्छिद्यते रूपान्तरेणावस्थानात्। सच्च खलु स्वेन रूपेण प्रागसदपि रूपान्तरेण सदेवोत्पद्यते। यच्चैतेषां कारणानां कारणं तत् खलु सदेव न कदाचिदसत् कस्मात् कारणादनुत्पत्तेः इत्यादि। एतदपि मूलकारणद्रव्यं विहाय मन्तव्यम्॥ परमात्मानञ्चापेक्ष्य सदप्यसद्भवति इत्यन्तं भाष्यम्॥ अत्र पृष्टो भवान् ब्रवीतु सदेवोत्पद्यते इत्यादि यदुक्तम्भवता तत् कं सिद्धान्तमाश्रित्येति। तत्र यदि सांख्यसिद्धान्तमाश्रित्य मयोच्यते इत्युच्यते तदा परमात्मानञ्चापेक्ष्य सदप्यसद्भवतीत्यस्या उक्तेः कोऽभिप्राय इति निर्णेतुं न शक्यते। यतस्तन्मते कार्य्यमपि सदेव न तु किञ्चिदपेक्ष्यासत् गुणसमुदायरूपायाः प्रकृतेः साक्षात् परम्परया च परिणामरूपं कार्य्यजातं सदेव न तु परमात्मानमपेक्ष्यासदिति। यदि च वेदान्तसिद्धान्तमवलम्ब्यैवाभिधीयते मयेति वक्तव्यं तदा तत्सिद्धान्ते कार्य्यमात्रं सदिति तु क्वापि न दृष्टं न वा श्रुतं तन्मते हि सतः स्वप्रकाशाखण्डानन्दचैतन्यात्मकस्य परस्य ब्रह्मणः सत्तया परमार्थतोऽसन् वियदादिप्रपञ्चः सन्निति प्रतीयते इति। अत एव सांख्यनय-

कौमुद्यां सत्कार्यप्रतिपादिकां "असदकरणादुपादानग्रहणादि-
त्याद्यिकारिकां व्याख्यातुकामेन सर्वशास्त्रपारदृश्वना श्रीमता
वाचस्पतिमिश्रेण असतः सज्जायते, एकस्य सतो विवर्तः कार्य-
जातं न तु वस्तु सत्, अपरे पुनः सतोऽसज्जायते, सतः सज्जायते
इति वृद्धाः। तत्र पूर्वस्मिन्पक्षत्रये प्रधानं न सिद्ध्यति इत्याद्यभि-
हितवता वेदान्तमतं कार्यमात्रस्यासत्त्वमेव प्रतिपादयाञ्चक्रे। अथ
तन्मते त्रिगुणात्मिकाया मायाया अनादिभूताया परिणामरूप
एव वियदादिप्रपञ्चः । एवञ्च स्वेन रूपेणासतो रूपान्त-
रेण सतः कार्य्यजातस्योत्पत्तिरित्येवोच्यते इति कि-
मसङ्गतमभिहितम्मयेति चेत् सत्यं एतादृश्या मायाया उ-
ल्लेखो भगवता सूत्रकृता कृतो न वा। कृतश्चेत् केन सू-
त्रेण कृतस्तद्दर्शनीयम् । न कृतश्चेत् सूत्रकारानुल्लिखितां
मायामवलम्ब्य भाष्येऽर्थव्यवस्थापनं कथम्प्रेक्षावदपेक्षणीयं स्या-
त् । अस्तु वा वेदान्तसिद्धान्तसिद्धां मायामवलम्ब्यैव पदा-
र्थव्यवस्थापनं तथापि परमेश्वरसिसृक्षावशात् तेनाधिष्ठीय-
मानैश्चतुर्विधैः पृथिव्यादिभिः परमाणुभिर्द्व्यणुकादिक्रमेण वायुप्रभृति-
कं कार्यजातमारभ्यते इति प्रशस्तपादाचार्यप्रभृतिभिः
प्रतिपादिते भगवत्सूत्रकाराभिप्रेतेऽर्थे काचिदसङ्गतिप्र-
दर्शनाय्यैवमभिधीयते भवता चेत्तदा सा प्रकटीकर्त्तव्या । न च
सूत्रकृद्भिः मिथो विरुद्धा अर्था नाभिहिता अतोऽविरोध
स्तेषां यथा निर्वहेत्तथैव सूत्राणि व्याख्येयानि तत्र वि-
निगमनाविरहेण केषां यथाश्रुतार्थपरत्वं केषां वा गौ-
णार्थत्वमित्यत्र श्रुतीनां समन्वितार्थकत्वं यस्मिन्नर्थे स एवा-
र्थो भगवतां सूत्रकाराणामभिप्रेत इत्यकामेनापि यद्वाङ्गीक-
र्तव्यम् । तथा च वेदान्तसिद्धान्ते श्रुतीनां समन्विता-

र्थकत्वेऽविरोधात् स एव व्याख्यातृभिरवलम्बनीय इति म-या सोऽवलम्बितः इति वाच्यं यतो भगवान् वात्स्याय-णः श्रीमदुद्योतकराचार्यप्रशस्तदेवाचार्योदयनाचार्यादयश्च सर्व्वे एव परमेश्वरेणाधिष्ठीयमानैः परमाणुभिर्द्व्यणुकादिक्र-मेण कार्य्यजातमारभ्यते इति प्रतिपादितवन्तः । भगवता मनुनोक्ता सृष्टिप्रक्रियाऽपि अत्रार्थेऽनुग्राहिका दृश्यतेऽतो वै-शेषिकतन्त्रे प्राक्तनानामृषीणामृषिकल्पानाञ्च श्रीमत्प्रशस्तपा-दाचार्यप्रभृतीनां व्याख्यानमुल्लङ्घ्य स्वकपोलकल्पनया व्या-ख्यातवद्भिरतिनिर्म्मलधीसम्पन्नैरपि अतिसाहसमनुष्ठितमिति विवेचयाम इत्यलं विस्तरेण ॥

अथाभिनवभाष्ये व्यवस्थापिता शक्तिः समालोच्यते ॥

शक्तिः खल्वपि प्रतिभावमनुगता न शक्यते निन्हो-तुं शक्नोति खल्वग्निर्दग्धुं जलञ्च तं शमयितुमाप्यकर्षणादि-ना धीयमानशक्तिः शस्यमधिकमुत्पादयति भूमिः सेयं प्र-त्यात्ममनुभवाच्छा शक्तिरित्यादि भाष्यम् ॥

ननु भवान् शक्त्यङ्गीकारं विनाऽनाप्नुवन्नात्मानं प्रत्ययो व्यवहारो वाऽवश्यं शक्तिमङ्गीकारयतीति मनसि कृत्य प्र-दर्शित—शक्नोति वह्निर्दग्धुमित्यादिप्रत्ययबलात् यदि व-न्ह्यादौ दाहादिकार्य्यानुकूलां सूत्रकारानुक्तां शक्तिं स्वभा-षितभाष्ये व्यवास्थितवत् तदा शक्नोति रूपं जनयितुं चा-क्षुषमित्यादिबलात् रूपादावपि शक्तेः सद्भावः प्रसज्यते । न च प्रतिज्ञार्थ एव नावधारितः मया तु प्रतिभावमनुग-ता सा रूपादावपीष्यत इति कथमापत्तिः तस्यास्तत्रेति वा-च्यं यतो द्रव्याश्रय्यगुणवान् इत्यादिना सूत्रकृता गुणा-दीनां निर्गुणत्वनिष्क्रियत्वे इत्यादिना श्रीमत्प्रशस्तपादा-

चार्य्येण च गुणादौ गुणक्रिययोः स्फुटं प्रतिषिद्धत्वेन भवतेष्यते गुणेऽपि गुण इत्येतावतैव गुणे गुणोऽङ्गीकर्त्तव्यः सर्वैरिति नास्ति कश्चित् प्रत्यवायापादकसमुल्लङ्घनको विधिरिति ! अथ यद्येवमभिदध्यान्मया गुणे गुण इष्यते भवद्भिरप्येतद्व्ययमेवं नोच्यते अपि तु गुणलक्षणसूत्रे अगुणवानित्यस्य गुणविशेषाभावपरत्वं गुणादौ संख्यादिरूपाणां गुणानां प्रतिषेद्धुमनर्हतया भाष्येऽस्माभिर्भिन्नं युक्त्या व्यवस्थापितमेवञ्च गुणात्मिकायाः शक्तेः गुणेष्युपगन्तुं शक्यत्वे रूपादाविष्यमाणायास्तस्याः कथमापादनमिति तदा गुणे गुणमङ्गीकारयितुं श्रीमत्प्रदर्शिताया युक्तेः समालोचनावसरेऽस्मद्दत्तमुत्तरमालोच्य सन्तोष्टव्यं श्रीमता । तर्हि शक्नोति खल्वग्निर्दग्धुमित्यादिप्रत्ययव्यवहाराः किमालम्बना भवद्भिरुच्यन्ते इति चेत् दाहकार्य्यनिरूपितवह्निनिष्ठकारणत्वावलम्बना इति विभाव्यताम् । न च शक्तिमपलपितु कुतो भवद्भिर्महान् प्रयासो नार्थवानित्येव विज्ञैर्विज्ञायेत यतः सा नामान्तरेणाङ्गीकृतेति वाच्यं तात्पर्य्यानवबोधात् । तथा हि भवता कारणतया शक्तेरेवमभ्यवगमे वयमुपहस्यामहे निजावधारणे भ्रमत्वमावधार्य्यते यदि हि कारणत्वमेव शक्तिः स्यात्तदा कारणत्वस्य पारिमाण्डल्यादृते वस्तुमात्राश्रयणेऽविवादात् । गुणात्मकतयाऽभ्युपेतायाः शक्तेस्तु द्रव्यातिरिक्तमाश्रयितुमशक्नुवानायाः कथन्तेन सममैक्यं शक्यवचनम्भवेत् द्रव्यातिरिक्तेऽपि गुणाङ्गीकरणाय भवता स्वनिर्म्मिताभिनवभाष्ये प्रदर्शिता युक्तयो नाभियुक्तानां श्रद्धामुत्पादयन्ति । प्रदर्शितमेतद्गुणादौ गुणाङ्गीकरणनिराकरणावसरे ॥ अथ कारणत्वावलम्बनाः शक्नोति वह्निर्दग्धुमित्याद्याः प्रत्यया नि-

भोक्ष्यन्तीति यदुच्यते भवद्भिस्तत्र तेषामालम्बनीभूतत्वेना-
भिमतस्पन्दतां कारणत्वं तन्त्रकृदुक्तेभ्यो द्रव्यादिभ्योऽतिरिच्यते
तेष्वन्तर्भवति वा । आद्यं चेदङ्गीकुर्य्युस्तदा फलितमस्म-
न्मनोरथद्रुमेण प्रायः । तथाहि भवद्भिः सूत्रकाराद्युक्ते-
षु पदार्थेष्वनन्तर्भूतं प्रत्ययानिर्वाहप्रयोजकानभ्युपगमकं का-
रणत्वमुरीकृत्य प्रत्यात्ममनुभवारूढा शक्तिर्निह्नूयते मया
तु भगवता सूत्रकृता गुणसूत्रोक्तचकारेण तां समुच्चित्याभ्यु-
पगतगुणत्वाया अपि तस्या गुणादावपि सद्भावानिर्वाहाय
गुणलक्षणसूत्रस्थागुणवान्पदस्य गुणविशेषाभाववत्परत्वं व्य-
वस्थाप्यते । एवञ्च भवदुक्तमदुक्तयोः समीचीनत्वासमी-
चीनत्वे विदुषामेव वेद्ये । द्वितीयश्चेदालम्ब्यते पक्षस्तदा का-
रणत्वस्योक्तेषु पदार्थेष्वन्तर्भावः प्रदर्शनीय इति चेत् का-
रणत्वं यद्युक्तेष्वन्तर्भावयितुं शक्येत तदैव चेत् क्षमा भवे-
द्भवतः तदाऽवधीयतामन्तर्भावः कारणत्वस्य । यद्धर्मावच्छि-
न्ना यावत्यो व्यक्तयस्तत्प्रत्येकाव्यवहितप्राक्क्षणावच्छेदेन तत्-
प्रत्येकाधिकरणे यद्धर्मावच्छिन्ननिरूपितो यः सम्बन्धोऽन-
न्यथासिद्धः तद्धर्मावच्छिन्ने स धर्मस्तेन सम्बन्धेन का-
रणत्वम् । तथाहि दाहत्वावच्छिन्ना यावत्यो दाहव्यक्तयस्तद-
व्यवहितप्राक्क्षणावच्छेदेन तदधिकरणे काष्ठादौ वह्नित्वा-
वच्छिन्ननिरूपितः संयोगः सम्बन्धोऽनन्यथासिद्धः इति व-
ह्नित्वमेव दाहत्वावच्छिन्ने संयोगसम्बन्धेन कारणत्वम् । एवञ्च
जात्यादीनां पूर्वतनैरभ्युपगतानां पदार्थान्तरत्वमभिदधता-
मस्माकं श्रीमत्प्रशस्तपादाचार्य्योदयनाचार्य्यप्रमुखैरेकदेशी-
यैर्नाम्नाऽप्यनुल्लिखितां शक्तिमनभ्युपेत्यापि पदार्थव्यवस्था
नातिभारवहा पूर्वतनैः सूत्रभाष्यतट्टीकाः प्रणीतवद्भिरपि-

कल्पेश्च द्रव्याद्यनन्तर्भूतत्वेन व्यवस्थापितं जात्यादिकं पुनरपलपतस्तु श्रीमतः शक्त्यादिकं केनाप्यनङ्गीकृतमङ्गीकृत्यापि पदार्थव्यवस्था भवेदितिभारवहेति वदामः॥

यत् पुनः सत् परमार्थतोऽप्यकारणवत् तत् पारमार्थिकं नित्यं वस्तुभूतं। तच्चात्र नोपदिष्टं प्रयोजनाभावात्। न खलु ब्रह्मात्मनोरितरेतरबुद्ध्या बध्यते पुरुषः मुच्यते ह्यनयेत्यागमवादः इति भाष्यम्।

नन्वत्र किमुपदेष्टव्यन्तन्त्रकृतः। यदि च मोक्षजनकज्ञानविषयत्वकं वस्तु तदा ब्रह्मात्मनोरितरेतरबुद्ध्या पुरुषो मुच्यतेऽत्र इति वदतो ब्रह्मात्मनोपदिष्टं प्रयोजनाभावादिति वचनं कथं न व्याहतम्भवेत्। तथा हि "धर्मविशेषप्रसूतात् द्रव्यगुणकर्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसमिति सूत्रम्।" द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतु इति भाष्यम्॥ अथ के पदार्था इत्यपेक्षायां द्रव्यादयः षट् के धर्म्मा इत्यत्र साधर्म्यवैधर्म्यरूपा इत्यर्थः। तेषामुद्बोधः कथं पुरुषार्थः इत्यत्र तत्त्वज्ञानं निःश्रेयसहेतुरिति तत्त्वमनारोपितं रूपमित्यादिका किरणावली च॥ अत्र सर्वत्रैवापवर्गो मुख्यं प्रयोजनं प्रतिपादितं तदुपायश्च तत्त्वज्ञानम्। यदि हि ब्रह्मात्मनोरितरेतरबुद्ध्या मुच्यते पुरुष इति भवदभिमतं तदा ब्रह्मैव मुख्यमुपदेष्टव्यमन्यत् सर्व्वं गौणमिति। एवं च भगवतां वैशेषिकसूत्रकृत्प्रभृतीनां वैशेषिकतन्त्रे वक्तुमनभिमतमात्माद्वैतं स्वानिर्म्मिताभिनवभाष्ये व्यवतिष्ठापयिषुणा या या स्वकपोलकल्पना कृता सा सा न विद्वद्धृदयाल्हादं जनयतीति।

एवं अर्थ इति द्रव्यगुणकर्म्मस्वित्येतत्सूत्राक्षरं दृष्ट्वा श्रीमत्-प्रशस्तपादाचार्य्योदयनाचार्य्यप्रभृतीनां व्याख्यानमनालोच्या-नादृत्य वा धर्म्मविशेषप्रसूतात् द्रव्यगुणकर्म्मसामान्यविशे-षसमवायानां साधर्म्म्यवैधर्म्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसमि-त्येतत्सूत्रोक्तान् सामान्यादीन् पूर्वेष्वन्तर्विभावयिषन्त-तो भवन्त आन्वीक्षिक्यामभिहितप्रमेयेऽन्तर्भूतपां समवाया-दीनां भगवत्पाक्षिलस्वामिप्रदर्शितपृथगभिधानप्रयोजनवत् तत्तत्पदार्थप्रस्थानकत्वेन चिरन्तनैर्निबन्धृभिरुक्तेषु तन्त्रेषु अपरिगणिते वैशेषिकतन्त्रे सामान्यादीनां पृथगभिधानप्रयो-जनं प्रस्थानभेदज्ञापनमिति प्रदर्शनानौचित्ये स्थेयस्येन श्रीमत्-प्रशस्तपादाचार्य्यादिभिर्व्यवस्थापिता यावन्तः पदार्थाः अ-नाकुला इति ब्रवीवत् कथमप्यशक्यप्रामाण्यशङ्केषु चिरन्त-नैर्निबद्धेषु निबन्धेषु निरतिशयं श्रद्दधतामस्माकमलमन-ल्पायासेनेति शम् ॥

---

## महर्षिकणादमतेऽभावपदार्थो नास्तीति सिद्धान्त-निरासाय अभावनिरूपकसूत्रव्याख्या आरभ्यते ।

### क्रियागुणव्यपदेशाभावात् प्रागसत् ॥ १ ॥

अत्र प्राक्शब्दः सावधिबोधकः कस्मात् प्राक् इत्याका-ङ्क्षायां उत्पत्तेरित्युपतिष्ठते उत्पत्तेः प्रागसत् अर्थात् का-र्य्यम् । एवञ्च कार्य्यं घटादि उत्पत्तेः प्राक्कालीनं य-दसत्त्वं यस्तादृशोऽभावस्तस्य प्रतियोगीत्यर्थः । स च प्रा-गभावः तत्र हेतुः क्रियेत्यादि क्रियागुणव्यपदेशः तद्वत्ता

व्यवहाराः तदभावात् कार्य्यं घटादि उत्पन्नं सत् अस्ति वर्तते श्यामामित्यादिव्यवहारयोग्यं भवति न तदुत्पत्तेः पूर्वं स हि प्रागभावः कार्य्यं प्रति जनकोऽपि अन्यथा घटादेरुत्पत्त्यनन्तरमपि तत्सामग्रीसम्भवात् पुनरुत्पत्तिः प्रसज्यते इति ॥ १ ॥

ध्वंससाधनायाह—

## सदसत् ॥ २ ॥

कारणव्यापारानन्तरं सदिति प्रत्यययोग्यं कार्य्यं नाशकव्यापारेणासदिति प्रत्यययोग्यं भवति अतः सदपि कार्य्यं सदाऽसत् तदात्मनाभावस्य प्रतियोगि स एवाभावो ध्वंसः। तथा च कार्य्यस्योपत्त्यनन्तरं जायमानोऽभावो ध्वंसः घटो नष्टो ध्वस्तोऽसीत इत्यादिप्रत्ययविषय इति सिद्धो ध्वंसरूपोऽभावः ॥ २ ॥

## असतः क्रियागुणव्यपदेशाभावादर्थान्तरम् ॥ ३ ॥

ननु भविष्यति घटो नष्टो घट इत्यादिप्रतीतिः घटस्यावस्थाविशेषमालम्बते न तु प्रागभावध्वंसौ इत्यत आह। सदिति सूत्रशेषः। एवञ्च क्रियया गुणेन च व्यपदिश्यमानं सत् असतः क्रियागुणव्यपदेशायोग्यादर्थान्तरमतिरिक्तमित्यर्थः ॥ ३ ॥

अथान्योन्याभावसाधनायाह—

## सच्चासत् ॥ ४ ॥

चकारोऽप्यर्थः तथा च सन्नपि घट स्वकीयतादात्म्यवा-

नपि असन् स्वेतरतादात्म्याभाववान् तादात्म्याभावः तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावः तेनैव पटो न घटः अश्वो न गौरित्यादिप्रतीतिर्जायते अन्यथा न स्यात् इत्याशयः ॥ ४ ॥

इदानीं चतुर्थमभावं कथयति—

## यच्चान्यदसदतस्तदसत् ॥ ५ ॥

अत्रासतपदद्वयं धर्म्मपरम् अतो यदन्यदसत् तदसदित्यन्वयः । अतः पूर्वोक्ताद्भावत्रयात् यदन्यदसत्त्वं अभावः तदसत्त्वमत्यन्ताभाव इत्यर्थः । तथा चोक्ताभावत्रयभिन्नोऽभावोऽत्यन्ताभाव इति समुदितार्थः । अस्योदाहरणं यथाऽत्र गोत्वं नास्ति गव्यश्वत्वं नास्तीत्यादिप्रतीतिविषयः । स च सार्वकालिकः तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकः अत्रेदं नास्तीति प्रतीतिसाक्षिक इति ॥ ५ ॥

इदानीं ध्वंसस्य प्रत्यक्षतां कथयति—

## असदिति भूतप्रत्यक्षाभावात् भूतस्मृते-र्विरोधि प्रत्यक्षवत् ॥ ६ ॥

असदितीतिकारेण प्रत्यक्षाकारं कथयति घटोऽसन् घटो नष्ट इत्याद्याकारं ध्वंसस्य प्रत्यक्षं भवतीत्यर्थः । तत्र हेतुः भूतेत्यादि । भूतस्य प्रतियोगिनः प्रत्यक्षाभावात् अभावप्रत्यक्षे प्रतियोग्युपलम्भाभावः कारणम् । तत्र च अत्र यदि घटो वर्त्तेत तदा दृश्येत न तु दृश्यतेऽतो नष्टो घट इत्यादितर्कः सहकारी भूतस्मृतेरित्यपि कारणकथनम् अभावप्रत्यक्षे प्रतियोगिज्ञानं कारणमित्यर्थः । विरोधिप्रत्यक्षवदिति दृष्टान्तः

यथा विरोधिनः प्रतियोगिनः प्रत्यक्षं भवति तथा ध्वंसस्यापीति भावः ॥ ६ ॥

प्रागभावप्रत्यक्षतामाह ।

## तथाऽभावे भावप्रत्यक्षत्वाच्च ॥ ७ ॥

अभाव इत्यस्य सामान्यशब्दस्य विशेषपरतया प्रागभाव इत्यर्थः । यथा ध्वंसे प्रत्यक्षमुक्तं तथा प्रागभावे ज्ञेयं भावस्य प्रतियोगिनः प्रत्यक्षत्वात् प्रत्यक्षयोग्यत्वात् । एवञ्च संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यत्वं चकारात् अन्योन्याभावप्रत्यक्षेऽधिकरणस्य योग्यत्वमपेक्षितम् इति ॥ ७ ॥

अन्योन्याभावप्रत्यक्षमाह–

## एतेनाघटोऽगौरधर्मश्च व्याख्यातः ॥ ८ ॥

एतेन घटो नष्टो घटो भविष्यतीत्यादिप्रत्ययानां ध्वंसप्रागभावविषयकत्वकथनेनाघटोऽगौरधर्म इत्यादिप्रत्ययो व्याख्यातः । एषामप्यन्योन्याभावविषयकत्वं ज्ञातव्यमिति भावः । अत्र धर्मस्यातीन्द्रियत्वेऽपि तदन्योन्याभावस्य प्रत्यक्षे प्रतियोगियोग्यत्व नापेक्षितं किन्त्वाधिकरणस्य योग्यत्वम् । अत एव स्तम्भे पिशाचान्योन्याभावो गृह्यते स्तम्भः पिशाचो न भवतीति ॥ ८ ॥

अत्यन्ताभावस्य प्रत्यक्षतामाह—

## अभूतं नास्तीत्यनर्थान्तरम् ॥ ९ ॥

अत्र भूतमिदानीं नास्तीति प्रतीतिः ध्वंसमात्रविषयत्वं प्राप्नोति अत्राभूतमिति अभविष्यत उपलक्षकम् । तथा च

यदत्र न भूतं नापि भविष्यत् तदत्र नास्तीति प्रत्यक्षप्रतीतिर्जायते तत् प्रत्यक्षं अनर्थान्तरम् । अनर्थान्तरमित्यस्य नास्ति विषयतयाऽर्थान्तरमत्यन्ताभावभिन्नं यस्येत्यर्थः । यथाऽवयविन्यां पृथिव्यां जलत्वं नास्ति तथाविधे जले पृथिवीत्वं नास्तीत्यादिप्रत्यक्षं न ध्वंसविषयत्वेन प्रागभावविषयत्वेनोपपद्यते अतोऽत्यन्ताभाव एव तस्य विषयो तादृशप्रत्यक्षे इन्द्रियसंयुक्तविशेषणतासन्निकर्षतर्कसहकृतः प्रतियोग्युपलम्भाभावः प्रतियोगिज्ञानं च कारणमिति ॥ ९ ॥

अभावसूत्रभाष्यं समाप्तम् ॥



(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्त) २

(१६) मीमांसाबालप्रकाश जैमिनीयद्वादशाऽध्यायार्थसंग्रह श्रीभट्टनारायणात्मजभट्टशङ्करविरचित । (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्ण (मीमांसा) २

(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृत । (वेदान्त) २

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १२

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचित सम्पूर्णम् (वेदान्त) २

(२१) श्रीहर्षप्रणीत खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । (वेदान्त) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधनी व्याख्ययाऽवतरणिकया च सहितम् ८

(२४) ब्रह्मसूत्रवृत्ति मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्त) २

(२५) क्रोडपत्रसंग्रह । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्या पक्षतानुमानगादाधर्या प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकाया कुसुमाञ्जलेश्च क्रोडपत्राणि ३

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चय । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेप । मणिभद्रकृतटीकया सहित । हरिभद्रसूरिकृत । १

(२८) शुद्धाद्वैतमार्तण्ड प्रकाशव्याख्यासहित । प्रमेयरत्नार्णवश्च

(२९) अनुमानचिन्तामणिव्याख्याया शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित परिभाषा—संस्कारप्रकाशात्मक । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित आह्निकप्रकाश ६

(३२) स्मृतिसारोद्धार । विद्वद्विश्वम्भरत्रिपाठिसंकलित ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । १

(३४) प्रस्थानरत्नाकर । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचित २

(३५) वेदान्तपारिजातसौरभ नाम ब्रह्ममीमांसाभाष्य श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकाऽऽख्यया व्याख्यया सवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्मामृतवर्षिणीसमाख्यव्याख्यासवलितम् । ४

(३८) विश्वप्रकाश । कोश । विद्वच्छ्रीमहेश्वरसूरिविरचित । ३

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकरणे श्रीसुबोधिनीटिप्पण्यो -प्रकाश गोस्वामि श्रीश्रीपुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित पूजाप्रकाश । ४

(४१) वेदान्तसिद्धान्तसंग्रह । श्रुतिसिद्धान्तापरनामक । श्रीब्रह्मचारिवनमालिमिश्रविरचित । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३

(४२) स्वानुभवादर्श । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचित । स्वकृतटीकाविभूषितश्च । १

